जम्बीरैर्बीजपूरैश्च नारङ्गैः पीतकैः फलैः ।
पूजयेत् सत्यनामानं [1]देवं तेन स तुष्यति ॥ ८ ॥
मत्स्यमांसैश्च तुष्यन्ति[3] सर्वे[2] रक्षःपुरोगमाः ।
सितैः फलैर्नारिकेलैर्भृंगश्च परितुष्यति ॥ ९ ॥
गन्धधूपप्रयोगैश्च नभोनामानमर्चयेत् ।
पुष्पैः सुगन्धिभिः शुक्लैर्मारुतः परितुष्यति ॥ १० ॥
कृसरं मधुसंयुक्तं पूष्णे[4] भक्त्या निवेदयेत् ।
वितथं तु शुभैरन्यैर्मद्यमांसविवर्जितैः ॥ ११ ॥
पूजितस्तुष्टिमायाति विवस्वांश्च[5] महामुनिः ।
पुष्पैः सपुष्पकैस्तुष्टिमवाप्नोति गृहक्षतः ॥ १२ ॥
मत्स्यमांसयुतैर्भक्ष्यैर्यमतुष्टिः सदा भवेत् ।
पुन्नागागरुधूपेन[6] गन्धर्वानर्चयेद् बुधः ॥ १३ ॥
मृगमांसयुतैर्भक्षै[7]र्भृङ्गराजं च तर्पयेत् ।
राजजम्बूफलैर्बिल्वैर्देवमभ्यर्चयेन्मृगम् ॥ १४ ॥
पायसैर्मधुसंयुक्तैर्मांसैर्भक्तैश्च शोभनैः ।
कर्पूरसुरभिद्रव्यगर्भैः संपूजयेत् पितॄन् ॥ १५ ॥
सपुष्पैर्मोदकैर्लाजैः पललैश्च विमिश्रितैः ।
दौवारिकं प्रयत्नेन पूजयेद् विघ्नकारकम् ॥ १६ ॥
अपूपैः शोभनैर्गन्धैर्धूपैर्माल्यैरनुत्तमैः ।
पुष्पैः कण्टकजातीनां सुग्रीवं पूजयेत् सदा ॥ १७ ॥
सपुष्पैर्लाप[8](ज)कैर्भक्ष्यैर्दधियुक्तान्नपायसैः ।
अर्चयेत्[10] पुष्पदन्तं तु यशोवीर्यान्वितं सुरम् ॥ १८ ॥
मांसैश्च सूकरादीनां वैनतेयं सदार्चयेत् ।
वरुणं च[11] महासत्त्वं पूजयेद् धूपचन्दनैः ॥ १९ ॥

---

१ द ख नदेव वेहि समुष्यति । २ द ख ग सर्व । ३ द ख °रे मृ° । ४ द ख पृष्टे, क. घष्णे । ५ द ख विवष्टायांश्च । ६ द ख. °गमुनृधू° । ७ द ख °क्षैं° । ८ द ख ग. °पुष्पैर्लोप° । ९ क. °घ° । १० द. ख. अवये । ११ द. वर्तुण घ्रु, ख चर्तुणं तु ।

राहुं च मांससंयुक्तैस्तर्पयेद् भक्ष्यभोजनैः ।
रुधिरेण प्रदत्तेन तुष्टिमेति शनैश्चरः ॥ २० ॥

मांसेन तु क्षयस्तुष्टिं रोगाणामधिपो व्रजेत् ।
मेदसा पूजयेद् रोगं सर्वलोकभयङ्करम् ॥ २१ ॥

वासुकिं क्षीरदानेन पूजयेत् सततं नरः ।
पूर्ववत् पूजयेद् देवं विश्वकर्माणमीश्वरम् ॥ २२ ॥

सितप्रसूनविन्यासैर्भल्लाटं पूजयेद् बुधः ।
दधियुक्तेन चान्नेन सोमं सर्वत्र पूजयेत् ॥ २३ ॥

कुबेरं धूपदानेन पूजयेत् सततं नरः ।
अदितिं च सुवर्णेन पद्मैरपि च पूजयेत् ॥ २४ ॥

अर्कमन्दारमालाभिर्वृषभं च समर्चयेत् ।
अन्येषामपि देवानामर्चनं धूपसाम्प्रतैः(?) ॥ २५ ॥

सर्वपुष्पफलैश्चैषां कार्यं बुद्धिमता सदा ।
इत्येते बलयः सर्वे शान्त्यर्थं परिकल्पिताः ॥ २६ ॥

शोधने कर्षणे भूमेः साधने रूपकल्पने ।
गृहे प्रवेशने रम्ये तिथिमभ्युदयेषु च(?) ॥ २७ ॥

स्कन्धावारनिवेशेषु पुरग्रामनिवेशने ।
देवालयक्षितिपवेश्मनिवेशनेषु
प्रोक्तान् बलीन् प्रवितरेत् प्रयतः सुरेभ्यः ।
प्रारम्भमन्यमपि वास्तुगतं चिकीर्षुः
कुर्वन्निमं विधिमभीप्सितभाजनं स्यात् ॥ २८ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
बलिदानविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

१ द. °ख्रु° । २ द. ख. °ने ।

# अथ कीलकसूत्रपातो नाम सप्तत्रिंशोऽध्यायः।

वर्णानां यानि दारूणि कीलकार्थं[1] नियोजयेत्।
इदानीं तानि वक्ष्यामि श्रेयःकीर्त्तिहिताय च ॥ १ ॥
खदिरोदुम्बराश्वत्थशालशाकधवार्जुनाः।
अञ्जनः कदराशोकतिनि[2]शारुणचन्दनाः ॥ २ ॥
[3]शिरीषसर्जन्यग्रोधवेणवः कीलकर्मणि।
पुन्नामानो[4] द्रुमाः शस्ताः स्त्रीनामानो[5] विगर्हिताः ॥ ३ ॥
अश्वत्थः खदिर[6]श्चैतौ विप्राणां वृद्धिकारकौ।
रक्तचन्दनवेणूत्थकीलौ[7] क्षत्रस्य पूर्जितौ[8] ॥ ४ ॥
शाकश्च[9] खदिरश्चेति सामन्तानां हिताविमौ।
कीलौ[10] शालशिरीपोत्थौ वैश्यानां कीर्तितौ[11] शुभौ ॥ ५ ॥
शूद्रजातेस्तु तिनिशधवार्जुनसमुद्भवाः।
वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ॥ ६ ॥
न्यग्रोधो[12] वणिजां धाम्नि भूमिकर्मण्युदुम्बरः[13]।
महामात्र(त्रा)[14]वैद्यानां कीलाः सर्जार्जुना गृहे ॥ ७ ॥
विप्राणां सर्ववर्णा[15]स्त्वथाः क्षत्रियाणां त्रिवर्णजाः।
वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानु[16]लोमतः ॥ ८ ॥
प्रतिलोमा न कर्तव्याः कीलका भूतिमिच्छता।
प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक् ॥ ९ ॥
द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः।
क्षत्रियाणां पुनश्चाष्टाविंशत्यङ्गुलसम्मिताः ॥ १० ॥
चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः।
विंशत्याद्यङ्गुलैः कीलाः शूद्रजातेस्तु ते हिताः ॥ ११ ॥

---

१ द °क्ष°। २ क °न°। ३ द ख °विषवर्जन्यस्तोध°। ४ द ख °नामो। ५ द. ख. °मो स्त्रिविरा गर्हिता। ६ द. ख. °राश्च ते। ७ द ख. °ल। ८ द ख °त। ९ द ख. °द°। १० द ख °ल। ११ द ख. °त शुभ। १२ द. ख °धा। १३ द ख °रा। १४ द. ख. °त्रस्त्वविनियानां, ग °स्त्वथैविद्यानां। १५ द. ख स्वेन। १६ द. ख. °मि°।

षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः ।
ब्राह्मणक्षत्रियविशां वेदा[1]ष्टाश्रषडश्रयः ॥ १२ ॥

षडश्रयस्तु शूद्रस्य प्रकृतेस्तु[2] यदृच्छया ।
दार्भमौञ्जौ[3]र्णकार्पासं विप्रादीनां यथाक्रमम्[4] ॥ १३ ॥

अर्धपर्वपरीणाहं[5] दृढं सूत्रं तु वर्तितम् ।
अलाभे[6] स्वस्य सूत्रस्य प्रोक्तादन्यतमं बुधः ॥ १४ ॥

गृह्णीयात् सूत्रमन्ये तु गृह्णीयुः स्वेच्छयैव ते[7] ।
इत्थं संभृत्य सम्भारान् गृहभर्ता शुभेऽहनि ॥ १५ ॥

शुक्लपक्षे शुचिः स्नातः स्थपतिश्च सिताम्बरः ।
गृहस्था[8]ननिमित्ता[9]त् तु देवस्थानानि[10] लक्षयेत् ॥ १६ ॥

कुसुमाक्षतमर्घ्यै[11]श्च कर्तव्या गृहदेवताः ।
आदौ स्थानानि शङ्कूनां परीक्षेत समन्ततः ॥ १७ ॥

तेषु सर्वेषु कर्तव्यमर्चनं तु[12] यथाविधि ।
गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः[13] पदे ॥ १८ ॥

गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम् ।
चतुरश्रां[14] चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम् ॥ १९ ॥

तस्या मध्ये प्रतिष्ठाप्यः कुम्भो हैमोऽथ राजतः ।
ताम्रको मृन्मयो वापि पूर्वालाभे परः परः ॥ २० ॥

अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलङ्कृतः ।
मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितैः[15] ॥ २१ ॥

प्रतिष्ठाप्या(प्यो ऽ)क्षतैः पुष्पफलबीजसमन्वितः ।
श्वेतेन चन्दनेनैनं चर्चयित्वा समन्ततः ॥ २२ ॥

---

१ द ख ग °टश्राज्ञप° । २ द ख °क्षियेस्तु, ग °क्षिपेस्तु । ३ द ख सौजमा चोर्णका° । ४ द ख. °द्रुम । ५ द. ख. हा । ६ द ख आल्मे । ७ द ख तौ । ८ द ख ग °ना° । ९ द. ख ग °त्ता तु । १० द. ख °नाभिल° । ११ ख ग °प्यस्वक° । १२ द. ख च । १३ द ख ब्राह्मण' पदे । १४ द ख. °स्रां° । १५ द ख गर्हिता ।

तस्योपरिष्टाद् विन्यस्येत् क्षीरवृक्षस्य पल्लवम् ।
सुगन्धिनार्थ[1]धूपेन धूपयित्वा चतुर्दिशम् ॥ २३ ॥
वेष्टयेदहतेनैनं शुक्लवस्त्रेण सर्वतः ।
वास्तुमध्ये यतो ब्रह्मा कुम्भरूपं(पः) स तिष्ठति ॥ २४ ॥
कुम्भस्योत्तरभागे तु कीलकान् स्थापयेद् बुधः ।
कीलानष्टौ परी[2]क्षेत स्था[3]पयेच्च यथाविधि ॥ २५ ॥
श्वेतचन्दनलि[4]प्तांस्ताञ् श्वेतपुष्पैर्वि[5]भूषयेत् ।
सालक्तकान् सुरभिणा धूपेन च सुधूपि[6]तान् ॥ २६ ॥
ऊर्णा[7]मयेन सू[8]त्रेण त्रिवर्णेनाभिवेष्टयेत् ।
मधुसर्पिर्दधिक्षीरैर्मू[9]लभागेषु लेपयेत् ॥ २७ ॥
अर्चयेत् परशुं सूत्रमष्टीलादी[10]नि सर्वतः ।
अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः ॥ २८ ॥
ततः पूर्वोत्तरे वास्तोर्भागे सप्तार्चिषः पदे ।
गोमयेन समालिप्ते कुशास्त[11]रणमास्थितः ॥ २९ ॥
अग्निकार्यं प्रकुर्वीत पुरो[12]धाः शान्तिमेव च ।
सांवत्सरः[13] शुचिः स्नातः कृतस्ना[14]नः(?) समाहितः ॥ ३० ॥
शङ्कुना[15] साधयेल्लग्नं सम्यक् त[16]द्धटिकाथवा (?) ।
रात्रिलग्नं तु नक्षत्रैर्मध्यास्तोदयसंश्रितैः ॥ ३१ ॥
एवं संसाधयेल्लग्नं यदीच्छेत् सिद्धिमा[17]त्मनः ।
पूजया[18] तुष्टिकारिण्या पूजयेच्च पुरोहितम् ॥ ३२ ॥
अभ्यर्चिते यतस्तस्मिन् ब्रह्मा भवति पूजितः ।
सांवत्सरस्य कर्तव्या त[19]तः पूजा यथाविधि[20] ॥ ३३ ॥

---

१ द. ख ग च । २ द पर्वान्स्वेत, ख ग यवीस्वेत । ३ द स्ना° । ४ द ख °प्तास्ता श्वे°; क °प्तास्ते श्वे° । ५ क वा । ६ द ख °पिता; क °पिता । ७ द ख. ऊर्वास° । ८ द ख स° । ९ द ख °मूल्यस्य° । १० द ख ग. °ष्ठीलावानि । ११ द °रिण° । १२ द ख °वा । १३ द ख रो शु°, ग °रशुचि° । १४ द ख °न । १५ द. ख ग शकुत । १६ द. ख ग तु खाटि° । १७ द. ख माप्नुयात् । १८ द. ख पूजा वा । १९ द ख °व्यास्त° । २० द ख °धि ।

सांवत्सरेऽर्चिते यस्मात् पूजितः स्याद् बृहस्पतिः ।
स्थपतिं पूजयेत् पश्चात् त्वष्टृतुष्टिचिकीर्षया ॥ ३४ ॥
तदधीनं यतः कर्म शुभं वा यदि वाशुभम् ।
श्वेतचन्दनदिग्धांस्तांश्च श्वेतपुष्पैश्च पूजितान् ॥ ३५ ॥
सदशैरहतैर्वस्त्रैरङ्गुलीयैः प्रपूजयेत् ।
परिकर्मकरा ये च तान् यथाशक्ति पूजयेत् ॥ ३६ ॥
हेम्ना वस्त्रादिदानैश्च वाग्भिर्वा परितोषयेत् ।
यथा सुमनसस्ते स्युस्तथा कर्तव्यमादरात् ॥ ३७ ॥
ततः स्थपतिराचम्य बलिकर्म समाचरेत् ।
सूत्रपाते बलिं धीमान् सार्वभौतिकमाचरेत् ॥ ३८ ॥
तस्यालाभे बलिः कार्यो यो भवेत् सोऽभिधीयते ।
विदधीत चरून् श्वेतरक्तपीतासितान् पृथक् ॥ ३९ ॥
पायसं कृसरं क्षीरं निष्पावान् श्वेतमोदनम् ।
पाविकादधिरूपांश्च पललोल्लापिकाघृतम् ॥ ४० ॥
दध्योदनं च संमिश्रं देवताभ्यो निवेदयेत् ।
तिलैर्घृतेन सहितैर्देवमग्निं च पूजयेत् ॥ ४१ ॥
ततश्च पायसं दध्ना ब्रह्मस्थाने निवेदयेत् ।
ततश्चानुक्रमेणैव देवताभ्यो बलिं हरेत् ॥ ४२ ॥
बलिकर्म यथान्यायं कृत्वा च द्विजवाचनम् ।
स्वशाखीयान् शुचीन् प्राज्ञान् पूजयेद् दक्षिणाफलैः ॥ ४३ ॥
ओङ्कारस्वस्तिपुण्याहैर्गीतवादित्रनिस्वनैः ।
ततो विप्रैः सह स्वामी कुर्यात् तस्य प्रदक्षिणम् ॥ ४४ ॥
अक्षतान् प्रथमं कुम्भे दापयित्वा द्विजोत्तमैः ।
ततो दक्षिणपूर्वेण गत्वा पुण्याहवाचकैः ॥ ४५ ॥

१ द वसु°, ख वस्तु° । २ द ख °लैश्च । ३ द ख वाग्भिर्वा । ४ द. ख
५ द ख °तेरक्तश्वेतमक्तपी° । ६ द ख °श्रि° । ७ द ख. ग °दध्यरू° ८ द ख
९ क. °मृ° । १० द ख दैवते° । ११ द. °चर्ता, ख. °चर्नां । १२ द ख
१३ द. ख °मा ।

अर्हंता[1]म्बरसंवीतः शुचिः स्थपतिरासने ।
निषे[2]द्य प्राङ्मुखः शङ्कुं[3] धृत्वा दक्षिणपाणिना ॥ ४६ ॥
पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले ।
मन्त्रानमून् जपन् वीरो हन्यात् परशुना ततः ॥ ४७ ॥
विशन्तु ते तलं नागा लोकपालास्तथैव च ।
प्रतिष्ठन्तु गृहं चास्मिन्नायुर्बलकरं भवेत् ॥ ४८ ॥
प्रहारान् सुस्थिरानष्टौ दद्यात् कीलस्य मूर्धनि ।
हन्यमाने ततः कीले निमित्तान्युपलक्षयेत् ॥ ४९ ॥
गोविप्ररै[4]थनागाढ्याः कन्या नृपवरै[5]स्त्रियः ।
शङ्खदुन्दुभि[6]र्वंशानां तथा गीतस्य च ध्वनिः ॥ ५० ॥
आविर्भवति यद्यस्मिन् हन्यमाने प्रभुस्तदा ।
सततं सुखमाप्नोति शान्त्यै[7]श्वर्यैश्च वर्धते ॥ ५१ ॥
हतं क्षुतं विपन्नं वा निषेधः सूत्रकीलयोः ।
पाषण्डिनां च सर्वेषां दर्शनं न सुखावहम् ॥ ५२ ॥
दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत् ।
हन्यमानो यदा कीलो विशेद् भूमौ शनैः शनैः ॥ ५३ ॥
कर्मसिद्धिर्भवेत् तत्र गृहं रत्नपरिच्छदम् ।
हन्यमानोऽपि न विशेद् धरित्रीं कीलको यदा ॥ ५४ ॥
न तत्र कर्मसिद्धिः स्यादनिमित्तं च लक्षयेत् ।
एकेनापि प्रहारेण यत्र कीलो विशेन्महीम् ॥ ५५ ॥
न सिद्धिं याति तत्रौकः कृतं वा नोपभुज्यते ।
आयस्याष्ठीलया हन्यान्न काष्ठेन कथञ्चन ॥ ५६ ॥
काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत् ।
अश्मना यदि ताडयेत तदा व्याधिं प्रयच्छति ॥ ५७ ॥

---

१ द. ख. °र्हंताम्बर । २ द ख °ष्पा° । ३ क कुम्भ । ४ द प्रवरमनागांश्च । ५ क. °र. ° । ६ द ख. °भिवासानां । ७ द ख. ग शान्त्यर्थैश्च, क. शान्तैश्च° । ८ द ख ज्व°; ग. ज्ञ° । ९ द. ख ग. स ।

ऐन्द्रीं प्रति नतः कीलो धनसम्मानकारकः ।
आग्नेय्यां प्रणते[1] कीले भवत्यग्निभयं महत् ॥ ५८ ॥

याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम् ।
धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥ ५९ ॥

सौम्यं सौम्यानते राजप्रसादायेशतो गतः[2] ।
कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहे[3] ॥ ६० ॥

परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते ।
हन्यमानो[4] यदा यत्नात् कीलः कश्चिदपि स्फुटेत् ॥ ६१ ॥

नाशं[5] विद्यात् तस्य पत्न्या ज्येष्ठस्य तनयस्य वा[6] ।
यदि भज्येत कीलः[7] स्यात् स्वामिनो जायते वधः ॥ ६२ ॥

यदा कीलः पतेद्धस्ताद् भ्रंशः स्यात् स्थपतेस्तदा ।
हस्तभ्रष्टश्च(?) स भवेदष्टीले हस्तविच्युते[9] ॥ ६३ ॥

सुखेन हन्यमानश्चेत् कीलः[10] स्वस्थो न जायते ।
अष्टौ प्रहारानपरांस्तस्य दद्यात् तदा पुनः ॥ ६४ ॥

स्रग्गन्धधूपोपहारैः कुर्याच्च[11] परिषेचनम् ।
इदं[12] साम महापुण्यं परिचिन्त्य[13] समासतः ॥ ६५ ॥

त्रैशोकं[14] तु जपेद् विद्वान् यावच्छङ्कभिषेचनम् ।
गत्वाथ नैर्ऋतीमाशां ततः शङ्कुं निवेशयेत् ॥ ६६ ॥

ऊर्णायि[15]वेन[16] साम्नास्य सम्यक्[17] स्नपनमाचरेत् ।
वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत्[18] ॥ ६७ ॥

---

१ ख ग च गते, ट. °गते कीलि। २ ट °म्यागतो राजप्र? । ३ ट हे.। ४ ट °न यदा मत्तान्। ५ ट मार्स विद्या त° ६ ख. च। ७ क लस्मात्। ८ क स्य। ९ ट. °विद्युते। १० क. ल्तुम्थो, ट. कील्तुस्या न जा°। ११ ट °च्च वतिपे°। १२ ट टदं मास महापुण्य परिवर्त्य। १३ क वर्त्य स। १४ ट वै श्लोक तज्जपेद्वि°। १५ ट. औत्तार्य वेनशाम्नासम्यक्। १६ क यवेशन; ख. यंक्तेन। १७ क. प्रागवत् (स्नानं स) मोच। १८ ट निवेश्य च।

अभिषेकं महारत्नसाम्ना तस्य समाचरेत् ।
अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत् ॥ ६८ ॥

भाग्रेण[1] साम्ना कुर्वीत प्राग्वत् तस्याभिषेचनम् ।
ततोऽनु सूत्रं वध्नीयात् स[2]व्यं द्विगुणवेष्टितम् ॥ ६९ ॥

प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा ।
म(ब[3])ध्यमानं यदा सूत्रं शङ्कुः[4] किमपि[5] मुञ्चति ॥ ७० ॥

तदा पुत्रवधं वि[6]द्याच्छिन्नं स्वस्वामिमृत्यवे ।
तस्माद् यत्नः प्रकर्तव्यो यावत् सूत्रं प्रसार्यते[7] ॥ ७१ ॥

चतुर्णामपि वाहूनां पोषं(?)छिन्नं न दुष्यति ।
सूत्रं प्रसार्य[9] वितरेच्चरून्[8] पूर्वं प्रकल्पितान् ॥ ७२ ॥

स्वेषु स्वेषु ततः स्थानेष्वनेन विधिना वुधः ।
शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात् ॥ ७३ ॥

प्राग्दक्षिणस्या विदिशो मन्त्रं चेमं हृदा जपेत्[10] ।
मारुनानां च सर्वेषां मा[11]नवानां तथैव च ॥ ७४ ॥

वलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम् ।
रक्तं वलिमुपादाय नैर्ऋत्यभिमुखस्तथा ॥ ७५ ॥

नैर्ऋत्यधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।
वलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥ ७६ ॥

[12]कृष्णं वलिमुपादाय गत्वा च दिशमानिलीम्[13] ।
नमस्ते नागराजाय ये चान्ये तं समाश्रिताः ॥ ७७ ॥

वलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम् ।
वलिमुद्धृत्य हारिद्रमैशानीमाश्रयें[14]न् दिशम् ॥ ७८ ॥

---

१ द भागेण । २ ट सत्य । ३ द. म° । ४ ख ग कु । ५ ट. चमपि । ६ द विद्याच्छिन्नसुस्वामि° ७ क रयेत् । ८ द च्चनून् । ख ग. नू । ९ क र्वि १० द जयेत् । ११ द मरुतानां त° । १२ द कृष्णां १३ द °लिम् । १४ ख ग येन् दि. द °येद्दिशम् ।

नमो रुद्रेषु सर्वेषु ये चान्ये तान् समाश्रिताः ।
प्रयच्छामि बलिं तेषां हारिद्रौदनमुत्तमम् ॥ ७९ ॥

एवमेतान् बलीन् सर्वान् यथावत् प्रतिपादयेत् ।
ततः कुम्भोदकं पुण्यं साम्ना दिव्येन मन्त्रयेत् ॥ ८० ॥

वामदेव्येन कुर्वीत प्रोक्षणं तेन वास्तुनः ।

द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने
फलं यच्छङ्कोश्च स्फुटमिह निमित्तानि बहुशः ।

तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं
बलिः कीलेषूक्तस्त्रिदशपरितोषाय विधिवत् ॥ ८१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
कीलकसूत्रपातो[5] नाम सप्तत्रिंशोऽध्यायः ॥

---

## अथ वास्तुसंस्थानमातृका नामाष्टात्रिंशोऽध्यायः ।

इदानीमभिधास्यामो वास्तुसंस्थानमातृकाम् ।
निवासहेतवे सम्यक् सर्वकर्मोपजीविनाम् ॥ १ ॥

चतुरश्रं समं †साचि दीर्घं वृत्तं च शम्बुकम्[6] ।
शकटाक्षभगादर्शवज्रकन्थाकृतीनि च(?) ॥ २ ॥

छिन्नकर्णं विकर्णं च शङ्खाभं क्षुरसन्निभम् ।
शक्त्याननं कूर्मपृष्ठं सदंशं व्यजनाकृति ॥ ३ ॥

शरावस्वस्तिकाकारं मृदङ्गपणवोपमम् ।
विशर्करं कबन्धाभं यवमध्यसमाकृति[10] ॥ ४ ॥

---

१ द. हृ° । २ द 'देवेन । ३ द यत्स° । ४ द नितांत । ५ द पातोध्यायो सप्तत्रिंशः ॥ छ ॥ ६ द सम्बुकं । ७ द च संयातं । ख. ग. संयात । ८ ख ग द 'संक्षामन' । ९ द. °रे । १० द ति. ।

† पूर्वाध्यायो गान्तिमश्लोकादारभ्या चत्वारिंशाध्यायावसानात् क पाठो त्रुटत, ख. गयोस्तु विनियोग 'ञेन्य 'ति पठ्यते ।

उत्सङ्गरा(ग)जदन्ताभे तथा परशुसन्निभम्[1]।
विस्रावितं च श्वभ्रं च ‡प्रलम्बं च विवाहिकम् ॥ ५ ॥
त्रिकुष्टं पञ्चकुष्टं च परिच्छिन्नं तथापरम्।
दिक्स्वस्तिकाभं श्रीवृक्षं वर्धमानसमाननम् ॥ ६ ॥
एणीपदं न[2]रपदं चत्वारिंशत् समासतः।
क्षेत्राण्युक्तान्यथामीषां विनियोगो विधीयते ॥ ७ ॥
चतु[3]रश्रे समे राजा शय्याकारे पुरोहिताः।
दीर्घे कुमारकाः सेनापतिर्वृ[4]त्तायते वसेत् ॥ ८ ॥
वसेयुः[5] शम्बुकाकारे सर्वे वाह्याः सुखार्थिनः।
अन्तःपुरं सद्म समे वाणिजाः शकटाकृतौ ॥ ९ ॥
वेश्यास्तु भगसंस्थाने दर्पणाभे सुवर्णकृत्।
संस्थानतो वज्रसमे जना नगरगोष्ठिकाः ॥ १० ॥
वसेयुः §शङ्खसंस्थाने क्षेत्रे पुत्राभिलाषिणः।
छिन्नकर्णे महामात्रा विकर्णे मृगल[6]ब्धकाः ॥ ११ ॥
शङ्खाभे चैकदृश्वानो गणाचार्याः क्षुरोपमे।
व्रता(जा)ध्यक्षः शक्तिमुखे कूर्मपृष्ठे तु मालिकाः ॥ १२ ॥
सदंशे[8] सौचिका वाजिपोषिका व्य[9]जनोपमे।
तक्षा[10]णश्च शरावाभे स्वस्तिके वन्दिमागधाः ॥ १३ ॥
पणवाभे मृदङ्गाभे वेणुतू[11]र्यादिवादकाः।
विशाके[12]रे तु रथिनः कबन्धप्रतिमे पुनः ॥ १४ ॥
नीचाः श्वपाकाश्च यवप्रतिमे धान्यजीविनः।
उत्सङ्गे श्र[13]मणा हस्त्यारोहिणो रा(ग)[14]जदन्तके ॥ १५ ॥

---

१ द भिभा। २ द नवपद। ख ग व। ३ द रस्रे। ४ द वि°। ५ द वसेच्च। ६ द ल°। ७ द का। ८ द °शे सुचि। ९ द वि°। १० द. तक्षणां ख सरावाने। ख ग ‘क्षणाश्च’। ११ द र्यां च वादिका। १२ द °कैमे, ख ग ‘मे’। १३ द. ‘श्रवणा। १४ द. राजदन्तिके।

‡ विनियोगे पुनरिदं न वक्ष्यते। § उपर्यपीद विनियुक्तम्।

परशुप्रतिमे क्षेत्रे बन्धनागारिणो जनाः ।
विस्राविणि सुराकाराः श्वभ्राभे कर्मकारिणः ॥ १६ ॥
युगले नापिताः स्वा[1]विवाह्व्ये( ? )कोशरक्षिणः ।
त्रिकुष्टे पञ्चकुष्टे च वसे[2]युर्वह्निजीविनः ॥ १७ ॥
समन्ततः *परिच्छन्ने सर्वे मानोपजीविनः ।
दिक्स्वस्तिके तु चैत्यानि कुर्याद् वासांश्च सर्वगः ॥ १८ ॥
श्रीवृक्षप्रतिमे[3] वृक्षान् यज्ञवाटांश्च कारयेत् ।
व[4]र्धमानाकृतिमुखेऽप्येतानेव प्रकल्पयेत् ॥ १९ ॥
एणीपदे तु गणिकां[5]श्चौरान् नरपदोपमे ।
इत्युक्ताः शुभदा[6] वासाः सर्वकर्मोपजीविनाम् ॥ २० ॥
कर्मोपजीविजनवासनिमित्तमेताः
क्षेत्राकृतीरभिहिताः प्रविमृश्य तेषाम् ।
वेश्मानि कारयति यः स्थपतिर्यथाव-
न्मान्यः स कस्य न भवेदिह भूमिपृष्ठे ॥ २१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते[7] समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वास्तुसंस्था[8](प ?)नमातृकानामाष्टात्रिंशोऽध्याय ॥

---

## अथ द्वारगुणदोषो नामैकोनचत्वारिंशोऽध्यायः ।

गृहाण्युक्तानि सर्वेषामेवं कर्मोपजीविनाम् ।
वर्णिनां च गृहस्थानां कथ्यन्तेऽतः परं यथा ॥ १ ॥
भल्लाटे धनदे यद्वा चरके पृथिवीधरे ।
ब्राह्मणस्य[9] भवेद् वेश्म माहेन्द्रद्वारमुत्तमम् ॥ २ ॥

---

१ ग स्वाधि वा, द. °वि° । २ द वसेत्पूर्वाह्नि° । ३ द मा । ४ द कृतिर्मुख्येप्येतान्येव । ५ द. °कार्चोरोत्तरपदोपमा । ६ द. °टा । ७ द विरचिता । ८ द °संस्थापन° । ९ द °मिव ।

* 'परिच्छिन्नमि'ति लक्ष्ये पठितम् ।

माहेन्द्रेऽर्केऽथ सत्ये वा आर्यके[1] वा निकेतनम् ।
कार्यं गृहक्षतद्वारं क्षत्रियस्य शुभावहम् ॥ ३ ॥

याम्ये वैवस्वते वापि गान्धर्वेऽथ गृहक्षते ।
वैश्यस्य भवनं कार्यं द्वारं पुष्पाह्वये शुभम् ॥ ४ ॥

वारुणे पौष्पदन्ते वा यद्वा मैत्रेऽथवासुरे ।
शूद्रस्य सदनं कार्यं भल्लाटद्वारमुत्तमम् ॥ ५ ॥

विप्राणां प्राङ्मुखं वास्तु गृहं स्याद् दक्षिणामुखम् ।
वर्धते धनधान्येन पुत्रपौत्रैश्च नित्यशः ॥ ६ ॥

दक्षिणाभिमुखं वास्तु भवनं पश्चिमामुखम् ।
क्षत्रियस्य धनं धान्यं विक्रमश्चेह वर्धते ॥ ७ ॥

वास्तुनः पश्चिमं[2] द्वारं भवनस्योत्तरामुखम् ।
तत्रैधते धनैर्धान्यैः पुत्रपश्वादिभिश्च विट् ॥ ८ ॥

वास्तु[3] स्यादुत्तरद्वारं गृहं पूर्वामुखं तथा[4] ।
शूद्रस्य कर्मवृत्तिस्तु[5] धनधान्यैर्विवर्धते[6] ॥ ९ ॥

एकस्यामपि शालायां चत्वारः संप्रकीर्तिताः ।
निवेद्यद्वारभागाश्च[7] कथ्यन्ते च शुभाशुभाः ॥ १० ॥

उत्सङ्गो हीनबाहुश्च पूर्णबाहुस्तथापरः ।
प्रत्यक्षाय[8]श्चतुर्थश्च निवेशः परिकीर्तितः ॥ ११ ॥

उत्सङ्ग §एवदीक्षाभ्यां(?) द्वाराणां वास्तुवेश्मनोः ।
स सौभाग्यप्रजावृद्धिधनधान्यजयप्रदः ॥ १२ ॥

यत्र प्रवेशतो वास्तु(?)गृहं भवति वामतः ।
तद्धीनं[9]बाहुकं[10] वास्तु निन्दितं वास्तुचिन्तकैः ॥ १३ ॥

---

१ ख. ग. 'स्ते', द आर्यस्ते वा निवेशनं । २ द °मं° । ३ द °स्तु । ४ द य° । ५ द °त्तिस्तद° । ६ द °ध्यते । ७ द °श्यगद्वाराश्च, ख 'श्यगृहद्वाराश्च' । ८ द क्षोय°, ख 'क्षो' । ९ द भ° । १० द °न ।

§ 'एकदिकाभ्यां द्वाराभ्याम्' इति पाठ स्यात् ।

तस्मिन् वसन्नल्पवित्तः स्वल्पमित्रोऽल्पबान्धवः ।
स्त्रीजितश्च भवेन्नित्यं विविधव्याधिपीडितः ॥ १४ ॥
वास्तुप्रवेशनो यत् तु गृहं दक्षिणतो भवेत् ।
प्रदक्षिणप्रवेशत्वात् तद् विद्यात् पूर्णबाहुकम् ॥ १५ ॥
तत्र पुत्रांश्च पौत्रांश्च धनधान्यसुखानि च ।
प्राप्नुवन्ति नरा नित्यं वसन्तो वास्तुनि ध्रुवम् ॥ १६ ॥
गृहपृष्ठं समाश्रित्य वास्तुद्वारं यदा भवेत् ।
प्रत्यक्षायस्त्वसौ निन्द्यो वामावर्तप्रवेशवत् ॥ १७ ॥
ब्राह्मणो निवसेन्मुख्ये द्विनाम्नि क्षत्रियो वसेत् ।
वितथे निवसेद् वैश्यः शूद्रः सुग्रीवनामनि ॥ १८ ॥
एते वैशेषिकाः सर्वे वर्णानामनुपूर्वशः ।
वास्तुद्वारनिवेशाश्च वासैः सह निरूपिताः ॥ १९ ॥
यथोत्तरमथोच्यन्ते वर्णानां गृहकल्पनाः ।
†शूद्रविट्क्षत्रियाणां च राज्ञां च जयकाङ्क्षिणाम् ॥ २० ॥
सार्धत्रिभूमि शूद्राणां वेश्म कुर्याद् विभूतये ।
अतोऽधिकतरं यत् स्यात् तत् करोति कुलक्षयम् ॥ २१ ॥
वैश्यस्य वर्धयेद् गेहमर्धपञ्चमभूमिकम् ।
अतिप्रमाणे तत्रास्य धनबन्धुपरिक्षयः ॥ २२ ॥
क्षत्रियस्य गृहं कुर्यादर्धषष्ठतलं परम् ।
सम्पद्बलसमृद्ध्यै तदतिरिक्तं तु तच्छिदे ॥ २३ ॥
परं विप्रस्य भवनमर्धसप्तमभूमिकम् ।
स्वाध्यायाचारभोगार्थमत्युच्चं तु भयावहम् ॥ २४ ॥
यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।
तलैरर्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ॥ २५ ॥

---

१ ट स्त्रितो यत्, ख ग शि । २ ट शूद्रं तु । ३ ट. सार्द्धत्रिभूमिशूद्रेण, ख ग र्व । ४ ख. ग त्रेग वे । ५ ट क्षय । ६ ट. °समृद्धौ । ७ ट न्यन्ते । ८ ट क्र । ९ ट तैलरर्द्धाष्टमेतेषां ।

† 'शूद्रविट्क्षत्रविप्राणा राज्ञाम्' इति पाठः स्यात् ।

आहृतानेकयज्ञानां राजा राजाधिपश्च यः ।
तस्याप्यर्धाष्टमतलं भवनं सन्निवेशयेत् ॥ २६ ॥

वाजपेयेन वा यष्टा यो द्विजः स्यात् समाहितः ।
गवां कोटि[1]प्रदो यो वा सोऽपि तस्मिन् भवे[2]द्यु(द)भीः ॥ २७ ॥

यथाप्रमाणनिर्दिष्टे वसन्तस्ते नृपादयः ।
प्राप्नुवन्ति परामृद्धिमवृद्धिं तु विपर्यये ॥ २८ ॥

सपीठतलकं वेश्म मानतः संप्रकीर्तितम् ।
साधारणेन हस्तेन परं शूद्रस्य विंशतिः ॥ २९ ॥

चत्वारिं[3]शद् विशः षष्टिः क्षत्रियस्य प्रशस्यते ।
अशीतिर्द्विजमुख्यस्य शतहस्ता महीपतेः ॥ ३० ॥

नातः परं नृणामूर्ध्वप्रमाणं शस्तमुच्यते ।
देवदानवदैत्यानां पिशाचोरगरक्षसाम् ॥ ३१ ॥

सिद्धगन्धर्वयक्षाणां विधातव्यमतोऽधिकम् ।
एकभौमादधो नैव गृहं शूद्रस्य विद्यते ॥ ३२ ॥

वैश्यस्य भवनं कार्यमधो नान्य(ध्य)र्धभूमिकात् ।
द्विभूमिकादधः कार्यं क्षत्रियस्य न मन्दिरम् ॥ ३३ ॥

सार्धद्वि[4]भौमाद् विप्रस्य त्रितलादपि भूपतेः ।
हीनप्रमाणादमुतो गृहं यत् कुशिल्पिना स्याद् विहितं कथञ्चित् ।
भर्तुर्भिये [5]सिद्धिविनाशनं तत् प्रशस्त[6]शीलादिविपर्ययाय ॥ ३४ ॥

गुणदोषान् प्रवक्ष्यामि द्वाराणां सर्ववास्तुषु ।
सुस्थितं चतुरश्रं च कान्तं स्वद्रव्ययोजितम् ॥ ३५ ॥

ऋजुं[7] स्वकीयदिग्भागे न ह्रस्वं[8] न तथोच्चकैः ।
नाल्पं न कुब्जं नाप्यनि(?)पिण्डितं न बहिर्गतम् ॥ ३६ ॥

---

१ द कोटि प्रदेया वा, ख ग टि प्रदेया वा°। २ द ख ग भवेदुभी। ३ ख ग द तिर्द्वयमु। ४ द. भू°। ५ द °यै द्वित्रिवि, ख ग 'द्वित्रिवि' (?)। ६ द °स्तलीला च विप°। ७ ख ग जू। ८ द ख ग स्वे।

नाध्मातं न कृशं मध्ये गतं नान्तरकुक्षिषु ।
न विद्रुतं न संक्षिप्तं यत् तत् स्याद् द्वारमृद्धिदम् ॥ ३७ ॥
पदस्य द्वादशे भागे पदमध्यात् प्रदक्षिणम् ।
स्थापितं वृद्धिमायाति द्वारं पुष्टिं करोति च ॥ ३८ ॥
रथ्याचत्वरशृङ्गाटवापीकूपाह(?)कुम्भकैः ।
कुड्यकोणतरुस्तम्भैर्भवनैस्यन्दनादिभिः ॥ ३९ ॥
यद् विद्धं भवनद्वारं तच्छुभाय न जायते ।
द्वारं द्वारे प्रविष्टं च कर्तव्यं विततेतत(?) ॥ ४० ॥
पेद्यां प्रवेशयेन्नैकामन्यद्वारे कदाचन ।
द्वारं प्रवेशयेत् पेद्यां नारोहणगवाक्षयोः ॥ ४१ ॥
पक्षद्वारस्य वा नैक्यं कथञ्चिदपि बुद्धिमान् ।
न बाह्यगान्तरे द्वारे प्रविष्टं कारयेत् क्वचित् ॥ ४२ ॥
विहितं हि तथा तत् स्याद् बहुदोषकरं सदा ।
तोरणं गोपुरद्वारैर्मट्टो येषां गृहे भवेत् ॥ ४३ ॥
गृहाणां मौलिकद्वारं श्रोत्रे चैतान् प्रवेशयेत् ।
द्वारं द्वारस्य कर्तव्यमुपर्युपरि भूमिषु ॥ ४४ ॥
प्रदक्षिणेन वा कार्यं कार्यं नापरथा पुनः ॥ ४५ ॥
उपर्युपरि भूमीनां मुखं कुर्यात् प्रदक्षिणम् ।
नापसव्येन कुर्वीत द्वारमारोहणानि च ॥ ४६ ॥
यस्यां भित्तौ कृतं पूर्वं तस्यामुपरि कारयेत् ।
तथान्यभित्तौ तद्द्वारं विधातव्यं प्रदक्षिणम् ॥ ४७ ॥
न मध्ये सद्मनो द्वारं कुर्यादेव पदस्य च ।
न स्थूले(?) न पदे नापि सिरापाते तदिष्यते ॥ ४८ ॥
निरंशावस्थितैर्द्रव्यैस्तिर्यक् का( क्रा )न्तैश्च मन्दिरे ।
मर्मवेधो न दोषाय द्वारवेधोऽथवा क्वचित् ॥ ४९ ॥

१ ग ट नो। २ ग ऐन्द्रयां प्र°। ३ ख ग नै। ४ ख ग रं पट्टो, द °द्वार पट्टो।
५ ग. य, ६ ट स्त।

यवनाट्टालकच्छाया पुरं[1]दैवकुलस्य च ।
न प्रवेश्या गृहद्वारे रश्मयः सोमसूर्ययोः ॥ ५० ॥

न प्राकारेण कुड्येन न विटङ्केन वा पुनः ।
अन्तर्हितानि दुष्यन्ति द्वारमर्माणि कुत्रचित् ॥ ५१ ॥

अत्युच्चे स्याद् भ[2]यं राज्ञो निम्ने तस्करतो भयम् ।
कुलपीडा भवेत् कुब्जे बहिर्याते पराभवः ॥ ५२ ॥

आध्मातेऽत्यन्तदारिद्र्यं[3] कृशमध्ये क्षयो नृणाम् ।
रथ्याविद्धे भवेद् [4]रोगो मरणं चत्वरेण च ॥ ५३ ॥

शृङ्गाटकेन वैधव्यं दुहितॄ[5]णां प्रजायते ।
वाप्या कूपेन वा विद्धे स्यादतीसारतो भयम् ॥ ५४ ॥

कोणान्मृत्युभयं दद्याद् वृक्षै रोगभयं भवेत् ।
स्तम्भेन म्रियते स्वामी भ्रमेणार्थो न तिष्ठति ॥ ५५ ॥

प्रणालेन महद् दुःखं महाभीतिर्महाकलिः ।
तस्मात् सर्वप्रयत्नेन द्वारवेधं विवर्जयेत् ॥ ५६ ॥

यस्याग्रतः पृष्ठतश्च द्वारे भित्त्योर्द्वयोरपि ।
अन्यो[6]न्यं भिद्यते यस्मिं[7]न्नेकगत्याश्रिते उभे ॥ ५७ ॥

वास्तु तद् भिन्नदेहाख्यं भिन्नस्वामिविधायकम् ।
न तत्र जायते वृद्धिः स्थापितस्य न कस्यचित् ॥ ५८ ॥

गृहकुक्षौ कृतं द्वारं सर्वरोग[8]भयङ्करम् ।
पूर्वद्वारं तु माहेन्द्रं प्रशस्तं सर्वकामदम् ॥ ५९ ॥

गृहक्षतं तु विहितं दक्षिणेन शुभावहम् ।
गन्धर्वमथवा तत्र कर्तव्यं श्रेयसे त(स)दा ॥ ६० ॥

पश्चिमेन प्रशस्तं स्यात् पुष्पदन्तं जयावहम् ।
[9]भल्लाटमुत्तरे द्वारं प्रशस्तं स्याद् गृहेशितुः ॥ ६१ ॥

---

१ ख द °रा दे । २ द भये राज्ञे° । ३ द द्र । ४ द द्वेगो । ५ द °त्रीणां । ६ द °न्या । ७ ख ग स्मिन्नेक । ८ द. रोगकर भय । ९ द भव्याट° ।

एकाशीतिपदे तस्मिंश्चतुरश्रपदेऽपि वा ।
द्वारोऽप्य(प)दगास्तासां क्रमो वह्न्यादितः फलम् ॥ ६२ ॥

हुताशभीतिः स्त्रीजन्म भूत्यर्थः प्रियता[1] नृपे ।
क्रोधे चानृतता[2](?) पुंसः क्रौर्यं स्यात् पूर्ववत् क्रमात् ॥ ६३ ॥

सुतापि(प्ति)प्रैष्यनीचत्वे भक्षयानसुतर्द्धिकृत् ।
रौद्रं कृतघ्नमचसं याम्यतः सुतवीर्यहृत्(?) ॥ ६४ ॥

सुनोपपीडा रिपुवृद्धिरर्थसुतानवाप्तिस्तनयार्थसम्पत् ।
स्वाप्तिर्नृशंसाद् भयमर्थनाश उक्तः क्रमादित्यपरोन्मुखेषु ॥ ६५ ॥

वन्धव्यसत्वे(?) रिपुवृद्धिरर्थसुताप्तिरग्या गुणसम्पदश्च ।
सुतार्थलब्धिर्द्विषयात्मजेन दोषांक्रिया नैर्ऋतदिङ्मुखेषु ॥ ६६ ॥

गुणाश्च दोषाश्च यथावदेते निरूपिता द्वारसमाश्रिता ये ।
ताञ् शिल्पविच्छास्त्रविदां वरिष्ठो विज्ञाय पूज्यत्वमुपैति लोके ॥ ६७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वारगुणदोषो नाम एकोनचत्वारिंशोऽध्यायः ॥

---

## अथ पीठमानं नाम चत्वारिंशोऽध्यायः ।

देवानां मनुजानां च पीठमानमथोच्यते ।
पीठं कनीयो भागं च सार्धभागं तु मध्यमम् ॥ १ ॥

द्विभागमुत्तमं तत् स्यादेषा पीठसमुच्छ्रितिः ।
महेश्वरस्य विष्णोश्च ब्रह्मणश्चोत्तमं भवेत् ॥ २ ॥

इतरेषां च देवानां कर्तव्यं तन्न धीमता ।
ईश्वरस्य यथाकामं पीठं कार्यं विचक्षणैः ॥ ३ ॥

---

१ द °र्हिंन । २ ख ग वा, द प्रिय वा । ३ ख वा । ४ द ग पा । ५ ख ग रर्थ । ६ ख ग द र्थि । ७ द ध्वे° । ८ द. दोषाक्रियानैर्धातश्चङ्मुखेषु । ९ ख, ग तश्चङ् । १० द लिर । ११ द द्वारगुणदोषाध्यायो नामैकोन चत्वारिश । १२ द नयति मानमथोच्यने । १३ द कमेयो भागोन ।

यस्मिन् स्थाने विधातव्यो ब्रह्मा विष्णुस्तथैव च ।
ईश्वरः सर्वतः कार्यो न दोषस्तत्र विद्यते ॥ ४ ॥
इतरेषां तु देवानां पीठं भागं समुच्छ्रितम्[1] ।
यस्य येन विभागेन वास्तुमानं विधीयते ॥ ५ ॥
तस्य तेनैव भागेन पीठोच्छ्रायो विधीयते ।
मनुजानां च पीठानि वेश्मनां[2] देवपीठकैः[3] ॥ ६ ॥
तुल्यानि कुर्यादुपरि कृता वृद्धिकराः सुराः ।
पुरमध्ये तु कर्तव्यं ब्रह्मणो गृहमुत्तमम् ॥ ७ ॥
चतुर्मुखं च तत् कार्यं यथा पश्यति तत् पुरम् ।
अधिकं सर्ववेश्मभ्यस्तथा राजगृहादपि ॥ ८ ॥
राजवेश्माधिकम्[4]अपि शस्यतेऽन्यैः[5]सुरालयात् ।
पञ्चमो लोकपालानां[6] राजा श्रेष्ठतमो[7] यतः ॥ ९ ॥
एवमेतानि[8] देवानां पीठान्युक्तान्यशेषतः ।
चातुर्वर्ण्यस्य[9] पीठानि ब्रूमो[10] विप्राद्यनुक्रमात् ॥ १० ॥
षट्त्रिंशदङ्गुलोत्सेधं पीठं विप्रस्य शस्यते ।
इतरेषां तु वर्णानां ह्रस्वं स्याच्चतुरङ्गुलम् ॥ ११ ॥
चातुर्वर्ण्यस्य[11] पीठानि भुङ्क्ते विप्रो गृहाणि च ।
त्रयाणां[12] क्षत्रियो वैश्यो द्वयोः शूद्रः क्रमात् स्वकम् ॥ १२ ॥
एवं विभागं[13] पीठानां स्थपतिः परिकल्पयेत् ।
हितं कारयितुर्वाञ्छन् नृपतेश्च समृद्धये ॥ १३ ॥
प्रमाणे स्थापिता देवाः पूजार्हाश्च[14] भवन्ति हि ।
प्रमाणं पीठानामिदमभिहितं ब्रह्ममुर[15]जि-
त्पुरारीणामत्रापरदिविषदां यच्च नियतम् ।

१ द समुद्धृत । २ द. वेश्मानां । ३ ख. ग ठके, द. के । ४ द कर्माय । ५ द ना ६ द पालानां । ७ द स्तस्तुतमो । ८ द. पच । ९ द चतुर्वर्णस्य । १० द. ब्रह्मो । ११ द वर्णासु; ख ग र्णासु पी । १२ द ख. ग. णामन्यजातीनां गृह शूद्रकमाशकम् । १३ द. ग । १४ द पूजायाश्च .. हि । १५ द सु ।

ततो विप्रादीनामपि निगदितं यत् तदखिलं
[1]यथौचि[2]त्यायोज्यं श्रियमभिलषद्भिः स्थपतिभिः ॥ १४ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
[3]पीठमानं नाम चत्वारिंशोऽध्यायः ॥

---

## अथ चयविधिर्नामैकचत्वारिंशोऽध्यायः ।

इदानीमभिधीयन्ते चयस्येह गुणागुणाः ।
सुविभक्तः समश्चारुश्चतुरश्रश्च[4]यः शुभः ॥ १ ॥
असंभ्रान्तमसन्दिग्धमविनाड्यं[5]न्यवर्द्दितम् ।
अनु[6]त्तममनुदूवृत्तमकुब्जं न च पीडितम् ॥ २ ॥
समानखण्डमृज्वन्तमन्तरङ्गं तथैव च ।
सुपार्श्वं सन्धिसु[7]श्लिष्टं सुप्रतिष्ठं सुसन्धि च ॥ ३ ॥
अ[8]जिह्मं चेति चे[9]यस्य गुणा विंशतिरित्यमी ।
एतेषां वैपरीत्येन दोषाणामपि विंशतिः ॥ ४ ॥
दक्षिणं तु यदा कुड्यं विचिनोति बहिर्मुखम् ।
तदा व्याधिभयं विद्यान्मृत्युदण्डं च निर्दिशेत् ॥ ५ ॥
पश्चिमं तु यदा कुड्यं विचिन्वन्ति वहिर्मुखम् ।
धनहानिं[10] तदा वि[11]द्याद् दस्युभ्य[12]श्च भयं भवेत् ॥ ६ ॥
उत्तरं तु यदा कुड्यं विचिनोति वहिर्मुखम् ।
कर्तारं स्वामिनं वापि व्यसनं प्रापयेत् तदा ॥ ७ ॥
प्राच्यं वहिर्मुखं कुड्यं चिनोति स्थपतिर्यदा ।
राजदण्डभयं तत्र निर्दे[13]ष्टव्यं विचक्षणैः ॥ ८ ॥

---

१ द यथोचित्यायोज्य, ख ग यथौ । २ ख ग 'त्यायोज्य । ३ द- पीठाध्यायो नाम चत्वारिंश ॥ छ ॥ ४ क श्शुभश्चय । ५ ख. द नाश्यं च गर्हित, ग श च ग । ६ ख. ग मत्तम, द अनुमत्तमनुद्वृत्तकु । ७ क पु । ८ द अवि । ९ द. वेयस्य । १० क नि ११ द विं° । १२ क भि । १३ द निर्दिष्ट विचक्षणे ।

एतदेव फलं ब्रूयात् पतिते[1] दलिते तथा[2] ।
यस्य प्राग्दक्षिणः कर्णः[3] प्रवर्तेत बहिर्मुखः ॥ ९ ॥
स्यात् तत्राग्निभयं घोरं गृहभर्तुश्च संशयः ।
गच्छेद् बहिर्मुखः कर्णो यदा दक्षिणपश्चिमः ॥ १० ॥
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ।
पश्चिमोत्तरकर्णे तु सम्प्रयाते बहिर्मुखे[4] ॥ ११ ॥
पशुवाहनपुत्राणां संशयस्तत्र जायते ।
प्रागुत्तरो यदा कर्णः प्रचीयेत बहिर्मुखः ॥ १२ ॥
गुरूणां संशयस्तत्र गोवृषादेश्च जायते ।
विशालं यदि जायेत सर्वबाहुषु चिन्वतः ॥ १३ ॥
कर्णिकासमसंस्थानं तद् भवेन्मल्लिकाकृति ।
[6]न तादृशो भवेदायस्तत्र यादृग् व्ययो भवेत् ॥ १४ ॥
चयस्य तस्य दोषेण गृह(ही)क्षीणः[7] पलायते ।
चिन्वतो यदि संक्षिप्तमत्यर्थं तत्र जायते ॥ १५ ॥
ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत् ।
विस्तृतं यदि बाह्येषु[8] संक्षिप्तं चैव मध्यतः ॥ १६ ॥
तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधो भयम् ।
उच्छ्रितं यदि कर्णेषु परिहीणं च मध्यतः ॥ १७ ॥
निर्णतं[9] नाम तद् विद्यात् तत्र चौरभयं भवेत् ।
कर्णेषु परिहीणं चेदुच्छ्रितं चापि मध्यतः ॥ १८ ॥
कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम् ।
विषमोन्नतकर्णेषु निर्दिशेद् द्रविणक्षयम्[10] ॥ १९ ॥
प्राज्यान्नपानं[11] तद् विद्यात् समेषु विहितेषु च ।
इत्येवं चीयमानस्य गुणदोषाः प्रकीर्तिताः ॥ २० ॥

1 द पन्ये तदखिले तथा । २ क दा । ३ ट कर्ता । ४ द ख । ५ क य । ६ द सतोद्रोद्रिम° । ७ ट गृहक्षीणे, ख ग णे । ८ क, ख ग ट, वा तेषु । ९ क ख ग र्न । १० द °ण । ११ द °त ।

तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत् ।
उदकेन समं नीत्वा सम्यङ्निश्चयकारणम् ॥ २१ ॥
तत्रा(स्मा)दृते न चान्यत् स्यान्निश्चयार्थं चयस्य च ।
तस्माज्जलेन वलयं गृह्णीयात् पूर्वमादृतः ॥ २२ ॥
ततः सुताडिते सूत्रे चयं कुर्याद् विचक्षणः ।
द्विगुणां क्षेत्रमानस्य रज्जुं कृत्वा तदन्तयोः ॥ २३ ॥
योऽसौ(?) कार्यौ ततस्तस्यां पादोनक्षेत्रमानतः ।
दद्यान्निरिञ्छनं कीलौ क्षेत्रगर्भान्तगामिनौ ॥ २४ ॥
निधायार्याः(य)सक्तौ तस्याः प्रान्तस्थौ योजयेत् तयोः ।
निरञ्छनाभिकृष्टायां पादोनक्षेत्रसंमितम् ॥ २५ ॥
भुजगत्या भवेद् रज्जुस्तस्यामिष्टानुमानतः ।
चिह्नं दद्यात् स कर्णः स्यादेवं दोषान् प्रसाधयेत् ॥ २६ ॥
भूरि नाच्छादनं दद्यान्न भिन्द्यात् तत्र चेष्टकाः ।
विषमस्थाः कुठारेण च्छित्त्वा ताः कल्पयेत् समाः ॥ २७ ॥
यथा न च स्पृशेत् सूत्रं विचिन्वीत तथा बुधः ।
कुड्ये च सादिमध्यान्ते दृष्टिमेकां निपातयेत् ॥ २८ ॥
यदा सर्वपरिक्रान्तं तलं चोद्घाटितं भवेत् ।
तदा नैकत्र कुर्वीत पर्यायेण विचक्षणः ॥ २९ ॥
उद्घाटनं स्तराणां(?) तु यदीच्छेत् सिद्धिमात्मनः ।
तत्र तत्र चयं कुर्याद् यदि संविद्धकं हितम् ॥ ३० ॥
दुर्वहं हि भवेत् तेन तस्मात् तत् परिवर्जयेत् ।
उपरिष्टात् समं पार्श्वे भुजं कुर्याद् विचक्षणः ॥ ३१ ॥

---

१ ड. ताम्यान्त° । २ ड यायार्थवस्य च । ३ ड णं । ४ ड यासौ कार्यो· ख ग. या । ५ ड स्रा । ६ ड र, ड °च्छन । ७ ड तै· । ८ क यामकौ । ९ ड. म्या । १० क. ष्णा । ११ ख. ग 'न '; ड °म्मिन । १२ ख ग ङ्ग, ड भुज° । १३ ख. ग ड न । १४ ख. ड. °मा । १५ ड. चिन्वान कल्पयेद्विमा ॥ १६ ड. विचिन्वाति । १७ ड द्वि ष्टमेकानियोजयेत्; ख. ग 'द्विष्टये' । १८ ख ग योजयं । १९ ड. °कांततलावा घटितं भवेत् ॥ २० ख ड. त° । २१ ड हि । २२ ड हि तत् ॥ २३ ड दुर्वलं, ख ग दुर्वल हि । २४ ख ग ड. मय कु° ।

समन्ताद् रुचकच्छिन्नश्चयो भित्तिषु पूजितः ।
तस्मात् प्रयत्नः कर्तव्यश्चयकर्मणि नित्यशः ॥ ३२ ॥

इति भाषितरूपितमाचरतश्चयकर्म यथाविधि शिल्पिकृतम् ।
भवतीह यशो भुवने विततं गृहभर्तृरपि प्रचुरो विभवः ॥ ३३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
चयविधिर्नामैकचत्वारिंशोऽध्यायः ॥

---

## अथ शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ।

इदानीमभिधास्यामो विधानं शान्तिकर्मणः ।
यथावदिष्ट्वा दिक्पालान् हुत्वा शान्तीर्यथाक्रमम् ॥ १ ॥

स्नपयेत् कर्णिकां कुम्भैः सहिरण्यैर्विचक्षणः ।
सर्वगन्धानुलिप्तां च माल्यदामविभूषिताम् ॥ २ ॥

कृतमाल्यानिवसितां(?) मूले च मधुलेपिताम् ।
दोषप्रशमनार्थाय तां मूलेषु निखातयेत् ॥ ३ ॥

मधुकुम्भमरिष्टं च शेवालं च विधानवित् ।
वाचयित्वा तु विप्रेन्द्रान् कृतपुण्याहमङ्गलान् ॥ ४ ॥

स्थापयेत् कर्णिकाः सर्वाः स्थपतिः प्रयतः शुचिः ।
एतेन विधिना कर्म चातुर्वर्ण्यस्य कारयेत् ॥ ५ ॥

कर्णिका रोपिता यत्र पुनरुत्पाट्य रोप्यते ।
न तन्निष्पद्यते वेश्म स्वामी चात्र विनश्यति ॥ ६ ॥

निखातं तु यदा दारु च्छिद्यते ताड्यते पुनः ।
तन्नाशो धनधान्यस्य स्वामिनश्चात्र सर्वथा ॥ ७ ॥

---

१ क ड ने क, ग ह्लचक । २ ड भापानिरूपितनारतश्च. यथाविधि । मूल्य° । ३ द. °ष्टा । ४ ड ह° । ५ स ग का । ६ ड. °प्ता । ७ क स, ड ता° । ८ ड लेपिता । ९ स ग द च । १० ड रोपिते । ११ द निखनित यदा दारुच्छिद्येत्येत्याद्य तत्पुन ।

वल्लीनिपीडितं दारु प्रवेशे चेन्निखन्यते ।
आशीविषभयं घोरं तस्मिन्नुत्पातलक्षणम् ॥ ८ ॥

उत्थाने कर्णिका रक्ष्या सर्वसत्त्वाभिसर्पणात् ।
नवे कर्मण्यशकुना मृगव्यालसरीसृपाः ॥ ९ ॥

कर्णिकामधिरोहन्ति दोषांस्तत्र वदेदमून्[1] ।
कृतापीडां परिहृतां यद्यारोहन्ति[2] वायसाः ॥ १० ॥

गृहिणस्तत् प्रवासः स्यादन्नं[3] पानं च हीयते ।
मयूरे तद्गृहं राजा हरेत् पञ्चाब्दतः परम् ॥ ११ ॥

वराङ्गे[4] जायते व्याधिः कोकिलैर्द्व्य[5]ब्दतः परम् ।
काकोलैस्त्रीणि वर्षाणि जायते सुमहद् भयम् ॥ १२ ॥

शुके स्युः कलहाद्या[6]नि न च निष्पद्यते गृहम् ।
कुक्कुटेऽग्निभयं विद्याद् राजतो वा महद् भयम् ॥ १३ ॥

सारिकायां तु दौःशील्यं स्त्रीणां गृहपतेस्तथा ।
मर्प[7]रूपैर्न[8](तु)विघ्नेन गृहं निष्ठां न गच्छति ॥ १४ ॥

स्त्रीपुंसयोः कुलिङ्गे तु जायते पापकारिता ।
पारावते[9] तु जायेते स्त्रीपुंसौ गुरुतल्पगौ ॥ १५ ॥

विडाले तु[10] कुलं दासैः सह रोगैर्निपीड्यते ।
ज्वलनो वा जलं[11] वापि हस्ती वा हन्ति तद्गृहम् ॥ १६ ॥

आरण्यै[12]ः शकुनैरेतत् स्याद्[13] वर्षाद् धर्षणे फलम् ।
यूनां[14] च जायते मृत्युर्मध्वा[15]सङ्गे धनक्षयः ॥ १७ ॥

दुःस्वप्नदर्शनं धूके[16] बालानां मरणं तथा ।
त्रस्तभीते निलीने तु राजा शून्यं हरेद् गृहम् ॥ १८ ॥

---

१ द र्लां । २ द °हति वायम । ३ द. °न्नपान । ४ द वरांगे यायितोव्याधि कोकिलैर्द्व्रितः पर । ५ ख ग. द्वा । ६ ख ज्यानि, द. सुकेमक्लहज्यानि न च निष्पद्यते गृह । ७ क. मर्पं । ८ क न । ९ द °पते । १० द ते । ११ द ज्व । १२ द णै । १३ द स्या । १४ ग नृणां ज । १५ द. °गगा° । १६ द. एके ।

यदा त्वग्रे प्रदृश्येत धूम्रः कर्णगतोऽपि वा ।
अग्निर्दहति तत् क्षिप्रं विद्युद् वा हन्ति मन्दिरम् ॥ १९ ॥

यत्रारोहति गृध्रस्तद् द्विजाङ्घ्रिस्पृष्टमाचरेत् ।
कृत्वा हलशतैः कृष्टं ततो बीजानि वापयेत् ॥ २० ॥

गावश्चात्र प्रदुःस्थेरन् शान्तिकानि च कारयेत् ।
मेघेऽभि[2]घृष्टे भूयोऽपि तत्र कुर्वीत मन्दिरम् ॥ २१ ॥

येषु येषु गृहाङ्गेषु मधुनः सञ्चयो भवेत् ।
तस्याङ्गस्य वधं ब्रूयात् प्रेषिण्यां चाप्युपद्रवम् ॥ २२ ॥

तस्माद्धेतोः शिखाग्रेषु मुकुटान् प्रणिधापयेत् ।
यावन्न रोपयेत् सौम्यं तावद् रक्षेत् समन्ततः ॥ २३ ॥

अभिलीनं तु शकुनैर्नहि किञ्चित् प्रशस्यते ।
तस्मात् प्रयत्नतो रक्षे[3]दुत्पातात् प्रागुदी[4]रितात् ॥ २४ ॥

भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते ।
इन्द्रकीलो महाकूटः पृष्ठवंशोत्तरौ[5] धरौ ॥ २५ ॥

प्रग्रहो(?)ऽलिन्दपादौ[6] वा स्वामिनं घ्नन्त्युपद्रवाः ।
तुलास्थपत्यः(?) कूटं वा वेदिका कर्णपालिका[7] ॥ २६ ॥

नेत्रं कपोतपालिश्च हनप्रवि[8]ष्टं कुटुम्बिनी[10](?)
अन्वग्राः[11] पक्षि(क्ष)वंशाश्च मल्लकाः सकुमारकाः ॥ २७ ॥

गोपानस्यो[12] मृगाल्यश्च स्थपिता[13]ः स्वकुमारिका[14]ः(?) ।
परिघा द्वारपक्षाश्च भ्रातरं घ्नन्त्युपद्रवाः ॥ २८ ॥

संयुक्तं सङ्ग्रहो हन्ति निकृष्टांश्चाधरो धरः ।
स्थौण्यानि प्रतिमोको वा हन्युरिष्टान् परिच्छदान् ॥ २९ ॥

---

१ क हि, द जाहि° । २ द मेघा° । ३ ख ग क्षेत् प्रातान्, द त् प्रातान् प्रागुदाहृतान् । ४ ख ग दाहृतान् । ५ द °त्तरोवरौ, ख ग 'व' । ६ द. प्रगृहो लिंगपादौ वा । ७ ख. ग द °का । ८ ख ग द °रिं° । ९. क. द । १० द °नीं । ११ द यज्वपशाश्च, ख ग यज्वव । १२ द °स्यौ । १३ द. ता । १४ द का ।

उद(प)धिर्भगिनीं हन्यादथवा परिचारकान्।
पुंसां पुन्नामसिद्धैर्द्रव्यैः स्त्रीणां स्त्रीन(नाम)भिर्भवेत्॥ ३०॥

उपघातो हतैर्नित्यं द्रव्याणां तु नपुंसकैः।
भूलिका स्त्रीविनाशाय गृहनाशाय वेधनम्॥ ३१॥

कीला वा सन्धिपालिर्वा मित्रनाशाय दुष्यति।
नवे गृहे नवं दारु क्रियमाणमथो कृतम्॥ ३२॥

आयोज्यमानं युक्तं वा न्यूनसंवत्सरं स्थितम्।
भज्यते देहनाशाय स्फुटत्यथ विभज्यते॥ ३३॥

गृहं ब्राह्मणसात् कृत्वा रत्नैरालिख्य चापरम्।
नवैर्वस्त्रैः परिच्छाद्य पुनर्भियानि(?)कारयेत्॥ ३४॥

दग्धे भिन्ने प्रचलिते विनते विद्युता हते।
विरूढे दलिते सन्ने सर्वत्रौषधिभिः स्मृताः॥ ३५॥

शान्तयो विविधं हुत्वा ब्राह्मणान् स्वस्ति वाच्य वा।
स्थूणिका भज्यते यस्य कीर्त्तिस्तस्योपहन्यते॥ ३६॥

चन्द्रसूर्यौ यजेत् तत्र ततः शाम्यति पातकम्।
तद्विधं वृक्षमानीय पुनस्तां प्रति कारयेत्॥ ३७॥

एवं कृते सुखी स स्यात् कीर्त्तिश्चायुर्ध्रुवा भवेत्।
मल्लको भज्यते यस्य पौरुषं तस्य हन्यते॥ ३८॥

इष्टानभसनक्षत्रं(?)प्रायश्चित्तं समाचरेत्।
तद्विधं वृक्षमानीय प्रति कुर्वीत मल्लकम्॥ ३९॥

एवं कृत्वा सुखी स स्याद् बलं चास्याभिवर्धते।
पृष्ठवंशस्य भङ्गेन गृही बन्धमवाप्नुयात्॥ ४०॥

---

१ द उधिर्भमिहन्या च दथवा, क. धिर्भगिना, ख ग 'भग्नि ह'। २ द स्त्रीणां स्त्रीनामतिर्भवेन्। ३ ख द. चू। ४ द वैधन। ५ द ले। ६ ख स्यान्न्यू। ७ ख, ग न्त्य, द. स्फुटत्यथ विभुज्यते। ८ द °थ मेयति तु का°, ख ग थ मेयति तु कार। ९ द भाने, ख ग कनै। १० द, त। ११ द, ण। १२ द यजस्तत्र। १३ द कृतमुखी सस्या। १४ क भु। १५ द यम्य तम्य पुरुषोपहन्यते, ख ग स्य तस्य पुरुषोऽपहन्य। १६ द ख ग, स्यादन चा°

राजराजं यजेत् तत्र प्रायश्चित्तं तथाचरेत्।
सुखी भवति तत् कृत्वा सर्वतश्चाभिवर्धते ॥ ४१ ॥
सर्वेषु स्वस्ति वाच्याश्च ब्राह्मणा दक्षिणाक्षतैः।
वारणो भज्यते यस्तु ज्येष्ठं पुत्रं स बाज्य(बाध)ते ॥ ४२ ॥
पृथ्वीधरं[3] यजेत् तत्र प्रायश्चित्तं [4]तथाचरेत्।
तद्विधं वृक्षमानीय पुनस्तं प्रति कारयेत् ॥ ४३ ॥
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धते।
संग्रहो भज्यते यस्तु कुलज्येष्ठं स बाधं(बाध)ते ॥ ४४ ॥
पितॄन् देवान् यजेत् तत्र प्रायश्चित्तं तथाचरेत्।
सुखी भवति कृत्वैवं प्रीयन्ते पितरस्तथा ॥ ४५ ॥
स्थूण्यं तु भज्यते यस्य तनयस्तस्य बाध्यते।
देवानेव यजेत् तत्र प्रायश्चित्तं तथाचरेत् ॥ ४६ ॥
तद्विधं वृक्षमानीय तत् स्थौण्यं प्रति कारयेत्।
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धने[6] ॥ ४७ ॥
उपधी व्यथते यत्र तत्रामात्यो विनश्यति।
यजेत वासवं[8] तत्र प्रायश्चित्तं तथाचरेत् ॥ ४८ ॥
आनीय तद्विधं[9] वृक्षमुपधिं प्रति कारयेत्।
एवं कृते[10] भवेत् सौख्यममात्यैश्च विवर्धते[11] ॥ ४९ ॥
कायस्तु व्यथते यस्य[12] प्रेष्य[13]स्तस्योपहन्यते।
यक्षं तत्र यजेद्[14] देवं प्रायश्चित्तं [15]तथाचरेत् ॥ ५० ॥
तद्विधं [16]काष्ठमानीय कायं तं प्रति कारयेत्।
एवं कृते सुखी स स्यात् प्रेष्यैरपि विवर्धते ॥ ५१ ॥
तुला तु व्यथते यस्य व्यथतेऽस्य कुटुम्बिनी।
यजेत मेदिनीं तत्र प्रायश्चित्तं तथाचरेत् ॥ ५२ ॥

---

१ ख ग ता। २ ट ग स पाल्यते, ख. चाल्यते। ३ द °रं जये तत्र। ४ क समाच। ५ द पित्रिदेवा त्यजे तत्र। ६ द ते। ७ द त अ मातौ वि°। ८ द वे। ९ द तद्विकत्। १० द ते। ११ क वर्धयेत्। १२ ख ग स्या प्रेपस्त। १३ द °ष°। १४ द जयेद्देव। १५ द, च तथा°। १६ द केषु।

तद्विधं वृक्षमानीय स्थापयेत् तां स्वलङ्कृताम् ।
ततस्त्वन्याः[1] क्रियाः पश्यन् कारयेन्मनिमान्[2] नरः ॥ ५३ ॥
वधूमिव नवैर्वस्त्रैः[3] प्रतिच्छाद्य स्वलङ्कृताम् ।
ब्राह्मणान् वाचयेत् स्वस्ति ततस्तां प्रति कारयेत् ॥ ५४ ॥
सुखी भवति कृत्वैवं धनैर्नित्यं[4] विवर्धते ।
कर्णिकास्वान्तरस्थूणामालापादोऽथ भज्यते ॥ ५५ ॥
तद्गृही दुःखमाप्नोति तस्मिन्नुत्पातलक्षणे ।
आनीय स्थपतिं तत्र प्रज्ञावन्तं बहुश्रुतम् ॥ ५६ ॥
तत्र वास्तुविभागेन यो देवः स्याद् विनिश्चितः ।
तस्मै देवाय जुहुयात् प्रायश्चित्तं च[5] कारयेत् ॥ ५७ ॥
सुखी भवति कृत्वैवं सर्वतश्चाभिवर्धते ।
युगं तु व्यथते यत्र तत्र स्यात् पशुपीडनम् ॥ ५८ ॥
यजेत तस्मिन्नीशानं प्रायश्चित्तं च कारयेत् ।
तद्विधं वृक्षमानीय युगं तत् प्रति कारयेत् ॥ ५९ ॥
एवं कृते सुखं तस्य पशुवृद्धिश्च जायते ।
तुलयो[6] अगयोर्वापि(?) पादो यस्य प्रभज्यते ॥ ६० ॥
आयुर्हानिर्भवेत्[7] तत्र बलदेवं[8] प्रपूजयेत् ।
प्रायश्चित्तं ततः कृत्वा पुनस्तं प्रति कारयेत् ॥ ६१ ॥
सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं[9] च तत् ।
द्वाराङ्गं यस्य माहेन्द्रं[10] हिंस्यते नवकर्मणि ॥ ६२ ॥
इन्द्रं तत्र यजेद्[11] देवं प्रायश्चित्तं तथाचरेत् ।
गृहक्षतस्य द्वाराङ्गे पूजयेद् यममेव तत्(म्) ॥ ६३ ॥
पुष्पदन्तस्य द्वाराङ्गे वरुणं तत्र पूजयेत् ।
द्वाराङ्गं यस्य भल्लाटं[12] हिंस्यते नवकर्मणि ॥ ६४ ॥

---

१ ख ग स्त्विमा क्रि, ट म्त्विमा क्रिया· न्यस्या· । २ क. त्प्रतिमां न । ३ ख ग र्धान्यैश्च व°, ट व र्धनधान्यैश्च व° । ४ ट. न्याक्षरा । ५ ट °त्त तथा चरेत्, क. ग. तथाचरेत् । ६ ख ट आ° । ७ ख ग यहानि, ट आयहानि° । ८ ट. वतु पू° । ९ ख. ग कर्मतत्, ट. शान्तिकर्मतत । १० क. न्द्रे । ११ ट इन्द्रं तत्र जये देव । १२ ख ग ल्वा, ट °ल्वाट ।

सोमं तत्र यजेद्[1] देवं प्रायश्चित्तं समाचरेत् ।
सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं[2] च तत् ॥ ६५ ॥

स्थूणाराजस्य यस्याग्रं चैकं[3] दक्षिणतो भवेत् ।
शरीरं व्यथते तत्र प्रतिसंवत्सरं स्थिरम्[4] ॥ ६६ ॥

पृष्ठतो[5] दीर्घशोकः[6] स्यादुत्तरेण धनक्षयः ।
पूर्वतो राजदण्डः स्यात् तस्मात् तद् ऋजु शस्यते ॥ ६७ ॥

चत्वार्यङ्गानि[7] हिंस्यन्ते शरीरा ये च वेश्मनः ।
तुला वा पृष्ठवंशो वा धारण्यां( णी )चोत्तराम्बरः[8] ॥ ६८ ॥

उक्तांस्तत्र बलीन् कुर्यात् प्रायश्चित्तं तथाचरेत् ।
एवं धन्यं शिवं पुष्टिप्रजावृद्धिकरं भवेत् ॥ ६९ ॥

इत्थं निमित्तानि गृहाश्रितानि
ज्ञात्वा प्रदिष्टान्[9] शकुनांश्च सर्वान् ।
शान्तिं प्रकुर्वन् पृथगुक्तरूपां[10]
प्राप्नोति कीर्त्तिं सुखमर्थमायुः ॥ ७० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ॥

---

## अथ द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्यायः ।

यदत्र नवकर्मोक्तं तद् यज्ञेषु गृहेषु च ।
ज्ञेयं ग्रामे पुरे वापि नगरे पत्तने तथा ॥ १ ॥

संस्थानमाकृतिर्मानं ह्रासंवृद्धी[11] च बाहुषु ।
एकमेव विजानीयात् सर्वत्रैव विचक्षणः ॥ २ ॥

यूपस्यैव निमित्तानि दारुकर्मणि निर्दिशेत् ।
पातं पंते[12] विजानीयात् तक्षणं[13] तैक्षणेन[14] च ॥ ३ ॥

---

१ द जये देव । २ ख. ग. कर्मवित्, द. °कर्म तत् । ३ द. चक्रं । ४ क. ते; द. स्थिरिं ते । ५ द पूज्यतो । ६ ख. ग द थोत्त° । ७ द. अ । ८ क. इ । ९ द. पा° । १० द, य । ११ ख ग द सं । १२ द. पा । १३ द तत् । १४ द तत् ।

यूपोच्छ्रायमिव ब्रूयाद् दारूणामपि चोच्छ्रयम् ।
भङ्गेन भङ्गो निर्दि(र्द्दे)श्यः समाधिश्च समाधिना ॥ ४ ॥

नवकर्[1]मणि यत् स्निग्धं सुगन्धि प्रियदर्शनम् ।
गम्येहरं(?)मनुष्याणां धन्यं तदभिनिर्दिशेत् ॥ ५ ॥

पुरं वा यदि वा ग्रामो गृहं वा यदि निष्प्रभम् ।
आयासबहुलं तद्धि तादृशैर्लक्षणैर्भवेत् ॥ ६ ॥

परिध्वस्तोपमं रूक्षं नवकर्मणि यद् भवेत् ।
भ्रमं रोगं च शोकं च त[2]स्मिन् वेश्मनि निर्दिशेत् ॥ ७ ॥

जं[3]नेन च यदाकीर्णं निश्छायमि[4]व लक्ष(क्ष्य)ते ।
कुटुम्बी तत्र षण्मासान् नात्र जीवेन्न संशयः ॥ ८ ॥

यच्छून्यमप्यशून्याभं वेश्म वा यदि वा पुरम् ।
सर्वकामगुणैर्युक्तं धनं(न्यं) तदभिनिर्दिशेत् ॥ ९ ॥

पूर्वो नगरभागश्चेद् रम्यः स्यात् प्रियदर्शनः ।
प्रियभार्या मनःस्वास्थ्यं धनं धान्यं च भूपतेः ॥ १० ॥

पूर्वदक्षिणभागश्चेत् पुरस्य प्रियदर्शनः ।
महद् यशस्तदाप्नोति राजा हेम च पुष्कलम् ॥ ११ ॥

पुरस्य दक्षिणो भागो यदा रम्यस्तदा भवेत् ।
राज्ञः सेनापतिप्राप्तिर्धनं धान्यं च पुष्कलम् ॥ १२ ॥

रमणीयो यदा भागः पुरदक्षिणपश्चिमः ।
अर्थसंपत् तदा राज्ञः प्रजावृद्धिश्च जायते ॥ १३ ॥

पुरपश्चिमभागेन रमणीयेन पार्थिवः ।
पुत्रबा[5]न्धवधान्याढ्यः संप्राप्नोत्युन्नतिं पराम् ॥ १४ ॥

पश्चिमोत्तरभागे तु रमणीये नराधिपः ।
प्रेष्यैः पुत्रैर्वाहनैश्च वृद्धिमेत्यु[6]त्तरोत्तराम् ॥ १५ ॥

१ द च। २ द तस्मि चाम्म°। ३ ख ग य। ४ द मेव लक्ष्यते। ५ ख, ग. वान्धनवानाढ्य, द पुत्रवान् धनधानाद्य। ६ क, ति नरोत्तम, ख त्युत्तरोत्तर।

उत्तरे रमणीये तु पुरभागे नरेश्वरः ।
शत्रून् विजयते सर्वान् वर्धते च पुरोहितः ॥ १६ ॥
यदि पूर्वोत्तरो भागः पुरस्य प्रियदर्शनः ।
यत्राभ्युत्तरमानन्दं[2] क्षिप्रं राज्ञो विनिर्दिशेत् ॥ १७ ॥
निष्पन्नस्य पुरादेर्यो भागो न स्यान्मनोरमः ।
तस्य तस्यैव भागस्य परिहाणिं विनिर्दिशेत् ॥ १८ ॥
नवे यदि पुरद्वारे कपाटं प्रविशीर्यते ।
स्त्रीनामधेयमन्यद् वा स्त्रीनाशं तद् विनिर्दिशेत्[3] ॥ १९ ॥
देवागारे पुरद्वारे प्राकाराट्टालकेषु च ।
हस्तिशालाश्वशालासु रथशालास्त(स्व)थापि वा ॥ २० ॥
कोष्ठागारायुधागारे निमित्तं तु शुभाशुभम् ।
यदि किञ्चित् प्रदृश्येत राज्ञस्तदभिनिर्दिशेत् ॥ २१ ॥
भङ्गो यत्रोर्ध्ववंशस्य तत्र राजा विनश्यति ।
अर्गलापीलिकाकुक्षीभङ्गे च नवकर्मणि ॥ २२ ॥
ग्रामे नश्यन्ति चैतानि तदा ग्रामो विनश्यति ।
द्वि(दि)गुत्थितं तु राष्ट्राणां गृहार्थेषु कुटुम्बिनाम् ॥ २३ ॥
नवकर्मणि[11] यत्किञ्चिद् भज्यते यदि वा नमेत्[12] ।
[13]वि(ध्व)स्ते वा स्फुटे वापि कुटुम्बिमरणं[14] ध्रुवम् ॥ २४ ॥
फलं सर्वनिमित्तेषु शुभं वा यदि वाशुभम् ।
संवत्सरं परं ग्राह्यं नवकर्मकृते गृहे ॥ २५ ॥
परिसंवत्सरान्ते च पुराणमिति निर्दिशेत् ।
[15]तुम्बिका भज्यते यत्र नवकर्मणि निष्ठिते ॥ २६ ॥

---

१ द रा । २ ट °न्द° । ३ ख ग °त् ॥ देवागारे पुरद्वारे पुन्नाम यदि भज्यते । तत्र राजा विनश्येत स्त्रीनाम यदि तत् स्त्रीय ॥ देवा, ट देवागारे पुरद्वारे पुन्नामयदि भज्यते । तत्र राजा विनश्येतत्स्त्रीनाम यदि तत स्त्रिय ॥ ४ द. च । ५ ट का. । ६ द का । ७ द यद्यत् कि° । ८, क. पि । ९ ख द शुचीभ° ग शुश्वी, । १० ट क्ति । ११ ट र्माणि । १२ ट नयेत् । १३ ख ग द विथस्ते वा । १४ द नसरण । १५ क गुम्बका ।

श्रे[1]ष्ठा तु महिला तत्र षड्भिर्मासैर्विनश्यति ।
एवमेव नवं यस्य सदनं तु विनश्यति ॥ २७ ॥
प्रे[2]ष्यदासा[3]दिविश्वासात् त[4]द् विनाशयति ध्रुवम् ।
पृष्ठवंशो नवो यस्य नवकर्मणि भि[5]द्यते ॥ २८ ॥
कुटुम्बी म्रियते तत्र गृहं संवत्सरात् परम् ।
प्रेष्याश्चात्र विनश्यन्ति दी[6]र्य[7]माणे विशेषतः ॥ २९ ॥
लुमासु भि[8]द्यमानासु कन्यामरणमादिशेत् ।
मुण्डकेषु विनष्टेषु सुहृ[9]दस्य विनश्यति ॥ ३० ॥
अनुपूर्वेषु भिन्नेषु पुत्राणां मरणं ध्रुवम् ।
विपत्तौ मुं[10]ण्डगोधानां माता तस्य विनश्यति ॥ ३१ ॥
ना[11]गपाशकभङ्गे तु[12] भृत्यानां मरणं भवेत् ।
कपाटे भ्रातृमर[13]णमर्गलायां स्त्रिया वधः ॥ ३२ ॥
सुतस्य चा[14]र्गलापार्श्वे विनष्टे मरणं भवेत् ।
द्वारबन्धे विनष्टे तु शीघ्रं कु[15]र्यात् कुलक्षयम् ॥ ३३ ॥
इन्द्रकीलो दृढो यस्य भङ्गमायाति मूलतः ।
सपुत्रपशुवर्गस्य तस्य ब्रूयात् कुलक्षति[16]म् ॥ ३४ ॥
तोरणं भज्यते यस्य द्रव्यं तस्य विनश्यति ।
गृहभर्तुश्च मरणं त्रिदशैरवधारयेत् ॥ ३५ ॥
वास्तुमध्ये विनष्टे तु कुलवृद्धो विनश्यति ।
सोपानं भि[17]द्यते यत्र नवकर्मणि निष्ठिते ॥ ३६ ॥
तस्य प्रेष्याश्च गावश्च हिरण्यं च विनश्यति ।
वेदिका भज्यते यस्य भार्या तस्य विनश्यति ॥ ३७ ॥

---

१ श्रेष्ठया तु । २ द. प्रेष्यां दस्सा मिविश्वास्यास्तद्विभासयति°, क क्ष, । ३ ख. ग सिविश्वास्यास्तद् विभासय । ४ क तं वि । ५ ख. ग द भज्यते । ६ ख ग वी, द वीर्यमाणो । ७ क प्यमानो वि । ८ द °स भद्य°, ख ग भज्यमा । ९ ख ग त्त । १० द प° । ११ द °क° । १२ क पु । १३ द °ण° । १४ द व, क. व्य । १५ ख ग भयात् । १६ ख ग द यम् । १७ ख ग द भज्यते ।

गवाक्षस्तु विनश्येत [1]पट्टस्तम्भोऽपि वा दृढः ।
गज[2]शुण्डाथ भि[3]न्नोऽश्वः कपोनाल्यथवा नवा ॥ ३८ ॥
स्थपनीपट्टिका[4]श्चैव स्त्रीविनाशं तदा[5]दिशेत् ।
विटङ्कस्य तुलाया वा भङ्गे जाते कथञ्चन ॥ ३९ ॥
[6]शालास्तम्भस्य वा नाशे भार्या तस्य विनश्यति ।
स्तम्भशीर्षं[7] यदि भ्र[8]श्येत् स्फुटेत् स्तम्भोऽपि वा दृढः ॥ ४० ॥
भज्य[9]ते प्रतिमोको वा स्वामिनस्तु वधो भवेत् ।
भङ्गे तु भङ्गवादिन्याः कुलवृद्धवधो भवेत् ॥ ४१ ॥
आका[10]शतलके[11] पुत्राः प्रतिच्छिन्ने[12] कुटुम्बिनः ।
विनष्टे च विनश्यन्ति षड्भिर्मासैर्न संशयः ॥ ४२ ॥
[13]प्रासादमण्डले भग्ने भग्नासु वलभीषु च ।
भार्या कुटुम्बिनस्तस्य नाशमायात्यसंशयः ॥ ४३ ॥
प्रलीनो वा विलीनो वा प्रासादो यस्य भज्यते ।
प्रलीने भृत्यमृत्युः स्याद् विलीने तु धनक्षयः ॥ ४४ ॥
मिश्रे विनष्टे प्रासादे हीय[14]न्ते सर्ववृ[15]द्धयः ।
मरणं वा भवेत् तत्र कुष्ठव्याधिं च[16] निर्दिशेत् ॥ ४५ ॥
येषु स्थानेषु भङ्गो वा विनतिर्वा प्रकीर्तिता[17] ।
उपद्रुतिर्वि[18]घातो वा [19]तेषां फलमपीरितम् ॥ ४६ ॥
स्निग्धानि यदि दृश्यन्ते तानि दार्ढ्यान्वितानि च ।
धनमायुश्च हर्षं च पूर्वोक्तानां तदादिशेत् ॥ ४७ ॥
क[20]र्णिकाभ्यन्तरी स्थूणा शालापादोऽथ हीयते ।
यदि तद् दुःखमाप्नोति गृहभर्ता न संशयः ॥ ४८ ॥

---

१ ख ग द पुट° । २ द. गजस्त्वंद्राथभिन्नश्च; ख. स्त्वद्राथ, ग स्त्वंध्यथ । ३ ख ग. भश्व । ४ ख ग द. चैव, चै । ५ क भवेत् । ६ ख द मा । ७ ख ग द पॅ । ८ द भ्रश्स्फुटे, ख ग ष्टे । ९ द. प्रयते । १० क शे । ११ द. °को । १२ द भ्र । १३ द प्रमाद° । १४ ख ग द यते । १५ द ख ग अद्विद , । १६ द °व्याधेव नि°, क त्रि । १७ क ख ग द. त । १८ द. °विन्नानो । १९ ख. ग द ये । २० द कार्तिकाभ्यानतरी ।

संप्रधार्य च मेधावी चलाचलमतन्द्रितः ।
निर्दिशन् चलमाप्नोति धनमायुर्यशस्तथा ॥ ४९ ॥
एवमादिकनिमित्तसूचितं संप्रधार्य मतिमान् चलाचलम् ।
स्पष्टमादिशति योऽत्र शास्त्रवित् कीर्तिवित्त+ध(भव)नानि
मोऽश्नुते ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्याय ॥

---

## अथ स्थपतिलक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ।

स्थापत्यमुच्यतेऽस्माभिरिदानीं प्रक्रमागतम् ।
ज्ञातेन येन ज्ञायन्ते स्थपतीनां गुणागुणाः ॥ १ ॥
शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम् ।
लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत् ॥ २ ॥
सामुद्रं गणितं चैव ज्योतिषं छन्द एव च ।
सिराज्ञानं तथा [10]शिल्पं यन्त्रकर्मविधिस्तथा ॥ ३ ॥
एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ।
शास्त्रानुसारेणाभ्युद्य लक्षणानि च लक्षयेत् ॥ ४ ॥
प्रसिद्धशास्त्रदृष्टान्तैर्वास्तुज्ञानं प्रसाधयेत् ।
वास्तुनः ससिरावंशैर्मर्मवेधैः सुनिश्चितैः ॥ ५ ॥
वास्तुद्वारक्षणान् भूयः सर्वान् जानाति शास्त्रतः ।
यस्तु शास्त्रमविज्ञाय प्रयोक्ता स्थपतिर्भवेत् ॥ ६ ॥
हन्तव्यः स स्वयं राज्ञा मृत्युवद् राजहिंसकः ।
मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः ॥ ७ ॥

---

१ द य । २ क. स्यनव । ३ द चय ? । ४ द सुम° । ५ क नमानि । ६ द. °फलाध्यायो नाम त्रिचत्वारिंशः ॥ छ ॥ ७ द. प्रा° । ८ द ज्ञवित्त°, ख ग वित्तो न । ९ द छंदस्येव । १० ख. ग. शन्य य । ११ द. ख ग लक्षणेन च, । १२ ख ग वे । १३ द मृ रोगनार्यहिंसक ।

अकालमृत्युर्लोकस्य[1] विचरेद् वसुधातले ।
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ८ ॥
स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ।
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ॥ ९ ॥
सोऽचक्षुरिव नीयेत विवशोऽन्येन[2] वर्त्मसु ।
कर्म वास्तुविधेः स्थानं मानमुन्मानमेव च ॥ १० ॥
क्षेत्रजाति(नि) च कर्माणि लुमालेखाच(श्च)तुर्दश ।
चत्वा(तु)रो गण्डिकाच्छेदान् वृत्तच्छेदेषु सप्तसु ॥ ११ ॥
सुश्लिष्टं सन्धिसन्धानैरधरोत्तरसंयुतम् ।
वाह्यरेखान्वितं शुद्धं यो जानाति स कर्मवित् ॥ १२ ॥
शास्त्रकर्मसमर्थोऽपि स्थपतिः प्रज्ञया विना ।
फलेयुः कर्मभिरन्यार्भिः[6](?) स्यान्निर्मद इव द्विपः ॥ १३ ॥
प्रत्युत्पन्नमतिर्यः स्याद् वार्हतः(कः) स्थपतिस्तथा ।
कर्मकाले न मुह्येत् स प्रज्ञानेनोपबृंहितः ॥ १४ ॥
अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम् ।
प्रज्ञापोतं समारुह्य प्राज्ञो वास्तुनिरं(?) तरेत् ॥ १५ ॥
ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः ।
एवं युक्तोऽपि न श्रेयान् यदि शीलविवर्जितः ॥ १६ ॥
रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च ।
अन्यं[10]चिन्त्यत्वमायाति दुःशीलानामविक्षयात्(?) ॥ १७ ॥
शीलवान् पूजितो लोके शीलवान् साधुसम्मतः ।
शीलवान् सर्वकर्मार्हः शीलवान् प्रियदर्शनः ॥ १८ ॥
शीला[12]धाने परं यत्नमाधि[13](ति)ष्ठेत् स्थपतिः सदा ।
ततः कर्माणि सिध्यन्ति जनयन्ति शुभानि च ॥ १९ ॥

---

१ द. अकाल्लोकमृत्यस्य । २ द. ख ल्येन । ३ क ड्डि । ४ ख ग दा ग्र । ५ क ख ग. च्छा; द न्छाटष्ट । ६ ख ग ण्य । ७ ख द ह्यत । ८ द रे । ९ द वास्तुर्न नाचरेत, ख ग स्तुर्ननाचरे । १० द. न्य । ११ क वी । १२ ख ग द, ल । १३ ग धेञ्चे स्थ, द, °माधेञ्चे स्थ° ।

तथाचाष्टविधं कर्म[1] ज्ञेयं स्थपतिना सदा ।
आलेख्यं लेख्यजातं च दारुकर्म चयस्[2]तथा ॥ २० ॥

पाषाणसिद्धहेम्नां[3] च [4]शिल्पं कर्म तथै[5]व च ।
एभिर्गुणैः समायुक्तः स्थपतिर्याति पूज्यताम् ॥ २१ ॥

स्थापत्यमङ्गैरिदमष्टभिर्यश्चतुर्विधं वेत्ति विशुद्धबुद्धिः ।
स शिल्पिनां संसदि लब्धपूजः परां प्रतिष्ठां लभते चिरायुः[6] ॥२२॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
स्थपति[7]लक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

## अथ अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ।

प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये ।
ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः ॥ १ ॥

तेष्वङ्गं प्रथमं प्रोक्तं वास्तुपुंसो विकल्पना ।
पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च ॥ २ ॥

रथ्याविभागः प्राकारनिवेशोऽट्टालकस्य च ।
विनिवेशः प्रतोलीनां विभागस्थानकानि च ॥ ३ ॥

प्रासादश्च तृतीयं स्याच्चतुर्थं तु ध्वजोच्छ्रितिः ।
पञ्चमं नृपतेर्वेश्म स्थानान्तरविभक्ति च ॥ ४ ॥

चातुर्वर्ण्यविभागश्च गृहभागश्च षष्ठकम् ।
सप्तमं यजमानस्य शालायां मानमीरितम् ॥ ५ ॥

यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा ।
अष्टमं राजशिबिरनिवेशो दुर्गकर्म च ॥ ६ ॥

---

१. लेख्यजातं च यत्तु क° । २ क, त । ३ द म्ना । ४ ख ग कल्पे धर्म, द कल्पे धर्म्य त° । ५ द °जा । ६ ग य, द, थ ७ द, स्थपतिलक्षणाध्यायो नाय चतुश्चत्वारिंश ॥ छ ॥ ८ द, द ।

यो वेत्त्य[1]ङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः ।
यशो मानं स लभते पूज्यते च नराधिपैः ॥ ७ ॥
अशास्त्रज्ञमक[2]र्मज्ञं स्थपतिं यः प्रयोजयेत् ।
न त[3]स्य वास्तु सिध्येत सिद्धमप्यसुखावहम् ॥ ८ ॥
तस्मात् कर्म च शास्त्रं च यो वेत्ति द्वितयं नरः ।
अष्टाङ्गमपि यो वेत्ति स राज्ञः स्थपतिर्भवेत् ॥ ९ ॥
अङ्गानि पूर्वमुक्तानि वास्तुशास्त्रोक्तविस्तरात् ।
तेषु प्रासादिकं यत् तद् वक्ष्यामोऽग्रे सविस्तरम् ॥ १० ॥
अथाङ्गं सप्तमं ब्रूमो[4] यत् तद् यज्ञेषु युज्यते ।
विनिविष्टे पुरे पूर्वं[5] क्लृप्तेषु सुरधामसु ॥ ११ ॥
दिशि दक्षिणपूर्वस्यां यज्ञार्थं मापयेद् भुवम् ।
निवेशं तत्र कुर्वीत चतुरश्रं समन्ततः ॥ १२ ॥
आयामेन विधातव्यो हस्ताष्टादशविस्तृतः ।
पूर्वद्वारं विधातव्यमादित्यस्य पदे बुधैः ॥ १३ ॥
तस्य पश्चिमभागे तु [6]यजमानकुटी भवेत् ।
षोडशायामविस्तारा प्राङ्मुखी सा प्रशस्यते ॥ १४ ॥
यजमानकुटीद्वारे देवता या च कीर्तिता ।
ततः प्रभृति पूर्वेण प्राग्वंशं प[7]रिकल्पयेत् ॥ १५ ॥
वेदिमध्ये स्थितं तत् स्यान्मानं वेद्यांश्च[8] शस्यते[9] ।
पूर्वापरेण षट्त्रिंशत् कर्तव्याः प्रक्रमा बुधैः ॥ १६ ॥
एकत्रिंशत् कुटीभागे मध्येऽष्टादश कल्पयेत् ।
प्रक्रमाः स्युः शिरस्थाने विंशतिश्चतुरु[10]त्तरौ[11] ॥ १७ ॥
पुरुषस्य शिरस्तत्र प्राग्वंशे तु प्रतिष्ठितम् ।
तस्मात् पूर्वोत्तरं ज्ञेयं सर्वयज्ञेषु पूजितम् ॥ १८ ॥

---

१ ख ग त्येतान्य, द यो भित्ते तान्यमूनष्टौ । २ द °मकर्मत । ३ द ते । ४ द. ब्रूयाद्य° । ५ द पूर्वं तत्क्लृप्ते । ६ द जय° । ७ क प्रतिक° । ८ द विद्याश्च कथ्यते । ९ क ख, ग कथ्यते । १० द °रोत्तरा, ख ग. रो । ११ क ख. रा ।

हंसपक्षत्वमानीय कुर्यात् कमलवर्तिताम् ।
तथा द्रुतभ्रमौ कृत्वा रेचितौ पार्श्वयोः शनैः ॥ २३८ ॥

रेचिताचित( विति ) विज्ञेयौ हस्तौ हस्तविशारदैः ।

इति रेचितौ ॥

व्यावृत्तिपरिवृत्तिभ्यां वर्तितौ चतुरश्रवत् ॥ २३९ ॥

कूर्परांसावि( ञ्चि )तौ हस्तौ नीतौ च त्रिपताकताम् ।
( शंकिञ्चि आश्रस्थितावेतौ ज्ञेयावुत्तानितौ ? ) ॥ २४० ॥

इत्युत्तानवञ्चितौ ॥

वाहू( हु )वर्तनया कृत्वा पूर्वव्यावर्तितक्रियाम् ।
चतुरश्रक( ? )परिवृत्तिभ्यां चतुरश्रः कृता( तो ) यदा ॥ २४१ ॥

वामहस्त( स्त )दितरः ( कृत्वादेष्वित ? )रेचितः करः ।
अर्धरेचितसंज्ञौ तौ विज्ञातव्यौ तदा बुधैः ॥ २४२ ॥

इत्यर्धरेचितौ ॥

वाहू( हु )वर्तनया वाहुशीर्षद्वौ( र्पाद् व्या )वर्तनेन वा ।
करणेन वि( निपू ) क्रान्तौ ( [3]सितं ? ) वाभ्यर्णमागतौ २४३ ॥

पताकावेव निर्दिष्टौ पल्लवौ नामतः करौ ।

इति पल्लवौ ॥

उद्वेष्टितवर्तनया गत्या ( [4]वसंत्रास्त्रया ? ) स्थितौ मूर्ध्नः ।
पार्श्वद्वितये पल्लवसंस्थने( नौ ) केशबन्धाख्यौ ॥ २४४ ॥

इति केशबन्धौ ।

अभिमुखमुभौ निविष्टौ ( सुविष्टितवर्तनक्रमादसौ ? ) ।
पल्लवहस्तौ पार्श्वद्वितये स्यातां लतासंज्ञौ ॥ २४५ ॥

इति लताहस्तौ ॥

---

१ मु. पु अयं सार्धश्लोक अर्धरेचितलक्षणानन्तरं निवेश्यो भाति । २ मु पु 'किञ्चित् त्र्यश्र-स्थितवितौ ज्ञेयावुत्तानवञ्चितौ' इति स्यात् । अक्षरसाम्यादेवमुन्नीतम् । 'किञ्चित् तिर्यक्तलावि'ति वा मुद्रितमूलपाठ । ३ मु पु. 'यदि' इति स्यात् । ४ मु पु 'च स्रस्तया' इति स्यात् ।

व्यावर्तितकरणाभ्यां ( करिहस्ते ) दक्षिणो लताहस्ता ( स्त ): ।
उन्नतविलोलितः स्यात् त्रिपताक( पता )को वामहस्तस्तु ॥ २४६ ॥

इति करिहस्त' ॥

उद्वेष्टित( परि ? )वर्तनया त्रिपताकावभिमुखौ यदा घटितौ ।
करिहस्तसन्निविष्टौ करौ तदा पक्षवञ्चितकौ ॥ २४७ ॥

इति पक्षवञ्चितकौ ॥

तावेव त्रिपताकौ हस्तौ कटिशीर्षसन्निविष्टाग्रौ ।
विपरावृत्तिविधानात् पक्षप्रच्योतकौ नाम्ना ॥ २४८ ॥

इति पक्षप्रच्योतकौ[1] ॥

( त्रिप शाखौ हस्तावधोमुखा हि तद् ? ) विज्ञेयौ गरुडपक्षाख्यौ ।

इति गरुडप( क्ष )कौ[3] ।

[आवर्तितपरिवर्तितकरणकृतौ हंसपक्षकौ गम् ॥ २४९ ॥

पक्षतिरूपत्वमानान्तौ प्रसृतौ च यदा भवेत् उपक्षौ ।
*व्यावर्तितपरिवर्तितयोगौ यदि मण्डलाकृती स्याताम् ॥ २५० ॥

ऊर्ध्ववर्तितादघवदा स्मृतावूर्ध्वमण्डलिनौ ।
तथोर्ध्वमण्डलिसंज्ञौ वावर्तितं विधाया परिवर्तितकरणतारौ ॥

इति पार्श्वमण्डलिनौ ॥

---

१ 'पक्षप्रद्योतकौ इति उद्देशानुसरेण पाठ्यम् । २ वल्यान्तर्गतमशुद्धप्रायं लुप्तकतिपयपदमिदं वाक्यम् 'अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ' इति मुनिना सङ्गृह्योक्त लक्षणवाक्यमवष्टभ्य शोधनीयम् । 'त्रिपताकौ' इति विशेष्यम् । ३ इत उपरि श्लोकत्रय दण्डपक्षोर्ध्वमण्डलिपार्श्वमण्डल्युरोमण्डल्याख्याना चतुर्णा हस्तविशेषाणां लक्षणप्रदर्शनपरमशुद्धपदप्रक्षेपादिना तथा मिश्रितं यथा तत् प्रायो विवेक्तुमपि न पार्यंत । अतस्तदर्थज्ञानाय मुन्युक्त तल्लक्षणमिह प्रदर्श्यते । यथा—"हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ ऊर्ध्वमण्डलिनौ हस्तावूर्ध्वदेशविवर्तनात् । तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥ उद्वेष्टितो भवेदेको द्वितीयश्चापवेष्टित । भ्रामितावुरस स्थाने ह्युरोमण्डलिनौ स्मृतौ ॥' ( नाट्यशा० अ० ९ श्लो० १७९–१८१ ) इति ।

* इत उपरि श्लोकानां यथावद् विभागानुपलम्भात् संख्या न निवेशिता ।

उद्वेष्टितौ यदैक एव भ्रमित उरसः स्थाने तौ द्वावपि स्याताम् ? ]
नियतमुरोमण्डलिनौ विज्ञातव्यौ तदा तज्ज्ञैः ।

इत्युरोमण्डलि(नौ) ॥

+ + + पल्लवो हस्तस्तथाराला( ह्वा चापरा ? ) ।
व्यावर्तनाकृतश्चैकस्तयोरन्योपवेष्टनात् ॥
उरोर्धयोगात् पार्श्वार्धयोगाच्च क्रमशः( स्थितौ ) ।
( एतौ विद्वा )न् विजानीयादुरःपार्श्वार्धमण्डलौ ॥ *

( इत्युरःपार्श्वार्धमण्डलौ ॥)

शुभं भूयात् ॥

* एतावानेव ग्रन्थ उपलभ्यते हस्तलिखितादर्शे ।